# गोलाध्यायं

नाम

---

श्रीमद्भास्कराचार्यविरचितसिद्धान्तशिरोमणे-

र्द्वितीयोऽध्यायः

जयपुरमहाराजाश्रितेन पण्डितसरयूप्रसाद-

सुतेन दुर्गाप्रसादेन

विरचिताभ्यां विलासिभाषाभाष्यसंज्ञकाभ्यां

व्याख्याभ्यां समलंकृतः ।

सच

---

प्रथमावृत्तौ

लक्ष्मणपुरे

श्रीयुतमुंशीनवलकिशोरयन्त्रालये मुद्रितः ।

सितम्बर सन् १८९३ ई० ॥

सौजन्यसौरभ्यभरैर्लसन्तस्तुष्यन्तु पीत्वा रसमस्य सन्तः ।
दौर्जन्यतो वा सुतरां हसन्तः संतोषमेष्यन्ति न वा मसन्तः ॥



२२ जुज़ ४ वर्क़

## आगे जिनके प्रकारकी हिसाबकी पुस्तकें मौजूदहैं उनमें कुछ नीचे लिखी जाती हैं—

---

### क्षेत्रप्रकाश

जिसको मुंशीगोविंदलाल सबातखल्लुसने अपने बनायेहुए रिसाले मुख्तसरुल्मसाहतसे श्रीयुत विज्ञतम अवधदेशीय पाठशालाओंके डैरेक्टरआफ़ पब्लिक इन्स्ट्रक्शन् विलियम हैंडफोर्ड साहिब बहादुरकी आज्ञानुसार देवाक्षरमें उल्था किया जिसमें अत्युत्तमजेबोंकी पैमायश और कई एक शहर लखनऊ आगरा इत्यादिकों की सूरत अतिपरिश्रम से बनाके इस पुस्तक में जमा किये हैं——

### क्षेत्रसुगमता

जिसको ठाकुर रघुपालसिंह साहब मुदर्रिस मदर्सा साहबगंजकी सहायता और जांचसे पण्डित दीनदयाल साहब थर्डमास्टर नार्मल तहसीली स्कूल प्रतापगढ़ने नागरी और देशी भाषामें श्रीयुतमिस्टर जान,सी,नेस्फ़ील्ड साहब बहादुर एम,ए अवध देशीय पाठशालाओंके मुख्य इन्स्पेक्टरकी आज्ञानुसार उर्दू तसहीलुल् मसाहत सय्यद अहमदहुसेन साहब हेडमास्टर नार्मल तहसीली स्कूल प्रतापगढ़के बनायेहुएसे उल्था किया इसमें कई एक आसानि नक्शोंकीमाप चित्रोंसे युक्तहै और मापके यंत्र कई प्रकारके बनेहैं व तरीकसे मापके क़ायदा सुगमता पूर्वक वर्णितहैं——

### क्षेत्रमापनक्रिया

इसको मौलवी फ़ताउल्लाह साहब प्रोफेसर म्योरकालिज इलाहाबादने बनाया था रिसाले मसाहतका देवनागरीमें श्रीयुत गुणज्ञ जान,सी, नेस्फ़ील्ड साहब बी,ए,एम,ए इन्स्पेक्टर मदारिस सूबे अवधकी आज्ञानुसार उल्था किया इसमें लम्बाई, क्षेत्रफल, पिण्डफलोंके जाननेकी रीति अति सरलता से लिखीगई है——

### ब्याजकीपुस्तक

जिसमें एकपाई से लेकर लाख रुपये तकका ब्याज छः रुपया सैकड़ाकी दरसे आरम्भ करके बारह रुपये सैकड़ातक फैलानेकी रीतिलिखीहै इसको

# बीजगणितस्य भूमिका

माङ्गल्यमन्दारशिखाप्रवालं
सान्द्रानुकम्पालतिकालवालम् ।
सार्थीकृताराधकचक्रवालं
वन्दामहे चन्द्रकिरीटबालम् ॥ १ ॥

नानाविध विज्ञानप्रकर्षेऽमुत्र भारतवर्षे उच्चावचकलनानवद्याया गणितविद्यायाश्चिरंतनः प्रचार इति निर्णीतं मया लीलावतीभूमिकायां तेन च प्राय सर्वेषामेव गणितभेदानामत्र सत्ता निश्चीयते । किंच ऋग्वेदादौ नामग्राहिकयाऽत्रिकुलोत्पन्नानामृषीणामुपरागावगमप्रशंसाश्रवणेन ग्रहगणितज्ञानकौशलं तत्प्रमेयाववोधकबीजगणितपरिचयश्च परिणमत्येव । तथापि संप्रति सांप्रतिकजनमनोरञ्जनाय बीजगणितसत्ताकालो मीमांस्यते—बीजगणितं हि नाम गणितसंहिताहोरारूपस्कन्धत्रयात्मकस्य ज्योतिः शास्त्रस्य मध्ये प्रायः सकलगणितोपजीव्यो गणितस्कन्धैकदेशः । अस्याव्यक्तगणितमिति द्वितीयं नाम । तच्च Algebra पूर्वमिहैव वर्षे प्रादुर्भूतं ततो विषयान्तरेषु प्रतिष्ठामलभत । यत एतदुपपन्नानि विधान्तराणि प्रश्नेषु सूर्यसिद्धान्तादिग्रन्थरत्नेषूपलभ्यन्ते । यथा सूर्यसिद्धान्ते कोणशङ्कोरानयनम्—

त्रिज्यावर्गार्धतोऽग्रज्यावर्गोनाद् द्वादशाहतात् ।
पुनर्द्वादशनिघ्नाच्च लभ्यते यत्फलं बुधैः ॥
शङ्कुवर्गार्धसंयुक्तविषुवद्वर्गभाजितात् ।
तदेव करणी नाम तां पृथक् स्थापयेद्बुधः ॥
अर्कघ्नी विषुवच्छायाग्रज्यया गुणिता तथा ।
भक्ता फलाख्यं तद्वर्गसंयुक्तकरणीपदम् ॥
फलेन हीनसंयुक्तं दक्षिणोत्तरगोलयोः ।

---

१ ऋग्वेदे चतुर्थाष्टके द्वितीयाध्यायस्य द्वादशे वर्गे राहुच्छायया सूर्यमण्डलस्य वेधो वर्णितस्तद्यथा सूत्रम्—'यं वै सूर्यं स्वर्भानुस्तमसा विध्यदासुरः अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन्' इति ।

याम्ययोर्विदिशोःशङ्कुरेवं याम्योत्तरे रवौ ॥
परिभ्रमति शङ्कोस्तु शङ्कुरुत्तरयोस्तु सः।,

"अत्रोपपत्तिः। तत्र 'यावत्तावत्कल्प्यमव्यक्तराशेः—' इत्याद्युक्तेः समौ पक्षौ साध्यौ तदर्थं कोणशङ्कुमानम् या १। द्वादशकोटौ पलभा भुजः शङ्कुकोटौ क इति फलं (भुजरूपं) कोणशङ्कुतलम् $\frac{\text{या. प १}}{१२}$ इदमग्रया युक्तं दक्षिणगोले भुजः $\frac{\text{या. प १ अ १२}}{१२}$ उत्तरगोलेऽग्रयान्तरितं भुजस्तत्र सममण्डलादुत्तरं शङ्कुतलोनाग्रा भुजः $\frac{\text{या. प १ अ १२}}{१२}$ सममण्डलाद्दक्षिणेऽग्रोनं शङ्कुतलं भुजः $\frac{\text{या प १ अ १२}}{१२}$ कोणस्य दक्षिणोत्तरपूर्वापरसूत्रमध्यत्वाद् भुजतुल्यसमचतुरस्रे कर्णः खस्वस्तिकात्कोणस्थसूर्यनतांशानां ज्या दृग्ज्योति भुजवर्गो द्विगुणो दृग्ज्यावर्गो दक्षिणगोले $\frac{\text{याव. पव १ या. प. अ २४ अव १४४}}{७२}$।
उत्तर गोलेतु $\frac{\text{याव. पव १ या. प. अ २४ अव १४४}}{७२}$। अयं कोणशङ्कुवर्गहीनत्रिज्यावर्गरूपदृग्ज्यावर्गसम इति पक्षौ समच्छेदीकृत्य छेदगमे पक्षयोः शोधनार्थं न्यासः।

दक्षिणगोले $\left\{\begin{array}{l}\text{याव. पव १ या. प. अ २४ अव १४४}\\ \text{याव ७२ त्रिव ७२}\end{array}\right\}$

उत्तरगोले $\left\{\begin{array}{l}\text{याव. पव १ या. प. अ २४ अव १४४}\\ \text{याव ७२ त्रिव ७२}\end{array}\right\}$

समशोधने नाव्यक्तपक्षेऽव्यक्तवर्गस्थाने द्विसप्ततिपलभावर्गयोगो यावत्तावद्वर्गगुणो व्यक्तस्थाने पलभाग्राचतुर्विंशतिघातो यावत्तावद्गुणो दक्षिणगोले धनमुत्तरगोले ऋणम्। रूपपक्षेतु चतुश्चत्वारिंशदधिकशतगुणेनाग्रावर्गेण हीनो द्विसप्ततिगुणस्त्रिज्यावर्गस्तुल्यगुणलाघवार्थं तथैव धृतः। तत्राप्येकदैव गुणनार्थं त्रिज्यावर्गार्धमग्रावर्गेण हीनं चतुश्चत्वारिंशदधिकशतगुणमिति सिद्धम्। सार्धराशिज्याधिकाग्रायां तु त्रिज्यावर्गार्धेन हीनोग्रावर्गश्चतुश्चत्वारिंशदधिकशतगुणः ऋणम्। अथ 'अव्यक्तवर्गादि यदावशेषं—' इत्युक्तेः पक्षयोर्मूलार्थमव्यक्तवर्गाङ्केनापवर्तः कार्यः। वर्गाङ्कस्तु द्विसप्ततियुतः पलभायुतः पलभावर्गः तेनापवर्तितेऽव्यक्तपक्षे प्रथमस्थाने यावत्तावद्वर्गः सिद्धः। द्वितीयस्थाने द्विमितगुणकस्य पृथक्करणात् 'अर्कघ्नी विषुवच्छायाग्रज्यया गुणित

तथा । भक्ता फलाख्यं—' इत्युक्त्या फलं द्विगुणं यावत्तावद्गुणं दक्षिणोत्तरगोलक्रमेण धनमृणम् । रूपक्षेपेऽपवर्तिते करण्याख्यं सार्धराशिज्यातोऽग्रायामूनाधिकायां धनमृणम् । ततोऽभिमूलार्थं पक्षयोरव्यक्ताङ्कार्धरूपफलस्य वर्गो योजितः । तत्राव्यक्तपक्षे योजनपूर्वकमूलग्रहणे प्रथमस्थाने यावत्तावत् द्वितीयस्थाने फलं दक्षिणोत्तरगोलयोर्धनमृणम् । यथा—( या १ फ १ ) ( या १ फ १ ) उत्तरगोलेऽव्यक्तस्य ऋणत्वम् ( या १ फ १ ) उभयथा मध्याव्यक्तनाशसंभवात् । रूपपक्षे तु मूलग्रहणे तद्वर्गसंयुक्तकरणीपदमिति सार्धराशिज्योनाधिकाग्रायां तु करण्यूनस्य फलवर्गस्य मूलम् । तथा च 'त्रिज्यावर्गार्धतोऽग्रज्यावर्गोनात्—' इत्यत्र सार्धराशिज्याधिकायामग्रायामुक्तानुपपत्तावपि 'यत्र क्वचिच्छुद्धिविधौ—' इतिभास्करोक्तरीत्या 'अग्रज्यावर्गोनात्—' इत्यत्राग्रावर्गेणाग्रावर्गाद्वा हीनादित्यर्थद्वयेन क्रमेण न्यूनाधिकाग्राऽसंबन्धेन वा न क्षतिरिति ध्येयम् । अथ पुनः समशोधनार्थं पक्षयोर्न्यासः ॥

या १ फ १<br>
या. प १

दक्षिणगोले करण्यूनफलवर्गपदस्य फलतो न्यूनत्वात्तत्पक्षयोरपिन्यासः ।

या १ फ १<br>
या. प १

अत्र 'एकाव्यक्तं—' इत्यादिना 'शेषाव्यक्तेनोद्धरेद्रूपशेषं व्यक्तं मानं जायतेऽव्यक्तराशेः' इत्यनेन च प्रथमस्थाने पदं फलेन हीनमित्युपपन्नम् । द्वितीयस्थाने पदेन हीनं फलमित्यृणं कोणशंकुर्भगवतायं नोक्तः ऋणस्य स्थितिविपरीतत्वात् । नन्वूर्ध्वगोले स्थितिविपरीतमधोगोलेऽदृश्यमपि दृश्यते येन तत्कथनमावश्यकं नाप्यधोगोले दृश्यत्वात्तत्कथनापत्तिः । ऊर्ध्वगोलस्थस्य छायासाधकत्वेन साधनात्तत्र छायासंभवादेवाप्रयोजकत्वात् ।

उत्तरगोले तु $\left\{\begin{matrix} \text{या१ फ१} \\ \text{या. प१} \end{matrix}\right\}$ वा $\left\{\begin{matrix} \text{या१ फ१} \\ \text{या. प१} \end{matrix}\right\}$

प्रथमस्थाने फलेन युतं पदमुपपन्नम् । द्वितीयस्थाने फलेनोनं पदमित्यृणत्वान्नोक्तः छायानुपयुक्तत्वात् । करण्यूनफलवर्गपदस्य फलतो न्यूनत्वात्तत्पक्षयोरपि न्यासः—

$\left\{\begin{matrix} \text{या१ फ१} \\ \text{या. प१} \end{matrix}\right\}$ वा $\left\{\begin{matrix} \text{या१ फ१} \\ \text{या. प१} \end{matrix}\right\}$ अत्र प्रथमस्थाने पदेन युक्तं फलं कोणशङ्कुरुपपन्नः । द्वितीयस्थाने पदेन हीनं फलं कोणशङ्कुरिति तद्द्वयमुपपन्नम् । नन्विदं तत्रोर्ध्वगोले दिनार्ध एवकोण शङ्कुद्वयं दृश्यत्वाद्भगवता कथमुपेक्षितमिति चेत् । न । तत्र त्रिज्यावर्गार्धतः—' इत्यत्र व्यस्तशोधनात्

फलेन हीनसंयुक्तं पदमित्यत्राप्युत्तरगोल एव 'हीनसंयुक्तं' इत्यस्यावृत्त्या फलं पदेन हीनसंयुक्तमित्यर्थसिद्धेर्भगवता तद्द्वयस्यानुपेक्षितत्वात्, समवृत्ता द्क्षिणस्थत्वे कोणशङ्कुर्दिनपूर्वापरार्धक्रमेण आग्नेय्यां नैर्ऋत्यां वोत्तरस्थं नैशान्यां वायव्यां वा भवतीति सर्वमुपपन्नम्' इति रंगनाथदैवज्ञाः ॥

किंच, ज्योतिःशास्त्रवेदिनां ज्यौतिपिक—गणक- सांवत्सर—मौहूर्तिक—तान्त्रिक—ज्ञातसिद्धान्त—दैवज्ञप्रभृतीनि नामधेयानि तत्तज्ज्योतिर्निबन्धेष्वमरकोशादिषु च समुपलभ्यन्ते । तान्यपि तद्दर्शनीयोच्चावचविषयचातुरीमाविष्कुर्वततमाम् । तथाहि——ज्योतिर्नक्षत्रादिकमधिकृत्य कृतं शास्त्रं ज्योतिषंनाम वेधादिद्वारेण तत्तद्ग्रहनक्षत्रमीमांसासाधनभूतः संदर्भसमुदयः । तत्पाठादिद्वारेणाधीते यन्त्रादिद्वारेण याथातथ्येन वेद निश्चिनोतीति ज्यौतिपिकः। अयं शब्दस्त्रिस्कन्धवादिनि तदेकदेशवादिनि वा प्रयुज्यते 'ज्योतिषं भूरिभेदं' इति भास्करोक्ततया सर्वेषां तत्रत्यभेदानां ज्योतिषत्वेन व्यवहारात्। 'ग्रन्थान्ताधिके च ६।३।७९।' इति सूत्रव्याख्याने 'सकाष्ठं ज्योतिषमधीते' सकलं, समुहूर्तं' इति भगवत्पतञ्जलिलेखात्।' सकाष्ठमिति। काष्ठादयः शब्दाः कालविशेषवाचिनः, उपचारात्तदर्थे ग्रन्थे वर्तन्ते' इति कय्यटव्याख्यानाच्च ॥

एतावता लेखेन प्रायः सर्वेषां ज्योतिषभेदानाममुत्र भारते वर्षे चिरंतनातमा प्रवृत्तिरिति परिणमति किं पुनर्बीजगणितमात्रस्येति ॥

अपि च पूर्वप्रदर्शितव्याकरणमहाभाष्यवाक्यात 'अस्ति ज्योतिषमिति पुण्याहेषु कर्म कुर्वते' इति वात्स्यायनीयकामसूत्राच्चेह ज्योतिषमिति शब्दस्य व्यवहृतिरभिनवतरेत्यपि स्फुटमवगम्यते । यतश्च नूतनपरामर्शेणापि सकलभूवलयमण्डनायमानकीर्त्तिचन्द्रिकात्प्रथमकालिदासात्प्रत्नो वात्स्यायनइत्यग्रे व्यक्तीभवति—तत्रभवता कालिदासेन हि निजकृताभिज्ञानशाकुन्तलीयचतुर्थाङ्कस्थे

---

१ अमरसिंहः कदा कुत्र समुत्पन्न इत्यद्यापि न निश्चेतुं शक्यते । तत्र 'धन्वन्तरिक्षपणकामरसिंहशंकु—'इत्यादि नवरत्नश्लोकं ज्योतिर्विदाभरणान्तिमाध्यायस्थं पश्यन्तः ख्रिस्ताब्दारम्भात्प्राक् प्रथमे शतकेऽमरसिंहसत्तां बहवः समर्थयन्ते । विल्सन् पण्डितः स्वकीयसंस्कृताभिधानस्य (१८१९ मिते ख्रिस्ताब्दे मुद्रितस्य) भूमिकायां पञ्चशतमिते ख्रिस्ताब्देऽमरसिंह आसीदिति स्थिरीकरोति । डाक्टरकेर्ननाम्ना विदुषा बृहत्संहितोपोद्घाते वराहमिहिरामरसिंहौ समकालिकौ, ख्रिस्ताब्दीयषष्ठशतकपूर्वार्धसमुद्भूतौ चेति निर्णीतम् । वेबरपण्डितस्तु अमरकोषातिरिक्ताः सर्वेऽपि कोषा. ख्रिस्ताब्दीयैकादशद्वादशशतकाधस्तना एव समुपलभ्यन्ते, अतोऽमरकोषोऽपि तेभ्योनातिप्राचीनो भवितुमर्हतीति 'हिस्टरी आव इन्डियन् संस्कृत लिटरेचर' नाम्नि ग्रन्थे वदति । एवं संदिग्ध एवाद्याप्यमरकोषस्य समयः सांप्रतमुपलभ्यमाने कोषकलापे नैकोमरकोषात्प्राचीन इति सर्वं संमतम्। अमरकोषेण प्रायः समानः कोषोऽग्निपुराणे समुपलभ्यते । अतोग्निपुराणादेवामरसिंहेन समुद्धृतः संस्कृतश्चेति प्राचः । बहुशास्त्रसारभूतमग्निपुराणं निर्मित्सुना केनचन विदुषा कोषभागे अमरकोषादेवसाम्मुद्धृत्य किंचित्परिवर्त्य स्थापितमिति तु नवीनविज्ञानविकासितबुद्धयः तत्र तत्तद्ग्रन्थकर्तृभिः पुराणेभ्यो विषय उद्धृतः, आहोस्वित्पुराणकर्तृभिस्तत्तद्ग्रन्थेभ्य इति संदिग्धमिति काव्यमालासंपादकाः ।

२ ज्योतिर्षमित्यत्र संज्ञापूर्वकत्वादण् प्रयोजिका वृद्धिर्न भवतीति व्याख्यासुधायां भट्टोजिदीक्षिततनयो भानुजिदीक्षितः ।

'शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः'

इत्यमुष्मिञ्श्लोके 'नायकमित्राणां च स्रगनुलेपनताम्बूलदानैः पूजनं न्यायतः श्वश्रूश्वशुरपरिचर्यया तत्पारतन्त्र्यमनुत्तरवादिता परिमिताप्रचण्डालापकरणमनुच्चैर्हासः तत्प्रियाप्रियेषु स्वप्रियाप्रियेष्विववृत्तिः। भोगेष्वनुत्सेकः। परिजने दाक्षिण्यम्। नायकस्यानिवेद्य न कस्मैचिद्दानम्। स्वकर्मसु भृत्यजननियममनुत्सवेषु चास्य पूजनमित्येकचारिणीवृत्तम्, इति कामसूत्रस्याभिप्रायः समग्राहि एतावता कालिदाससत्ताकाले वात्स्यायनीयकामसूत्राणां प्रचुरः पठनपाठनादि। व्यवहार आसीदिति निर्विवादमवसीयते। यद्येवंविधा मान्यताऽव्याहतप्रवृत्तिश्च नाभविष्यत्तर्हि कालिदासभारविमाघश्रीहर्षभवभूतिक्षेमेन्द्रादिमहाकविवर्गः स्वस्वसंदर्भेषु तत्रत्यान्विषयान्नायोजयिष्यत्॥ एवं हि गणयतीति गणकः। 'गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः, इत्यादि। संवत्सरं लक्षणया तत्प्रतिपादकं शास्त्रं वेत्तीति सांवत्सरः। मुहूर्तमधिकृत्य कृतं ग्रन्थमधीते इति मौहूर्तिकः। तन्त्रं सिद्धान्तमधीते वेद वा तान्त्रिकः सिद्धान्तवित्। यद्यपि

सिद्धान्तोदीरितो ह्यर्थो निजयुक्त्यैव बध्यते।
निखिलो यत्र तन्त्रं तन्निजोपकरणाश्रितम्॥

इति मरीचिधृतनारदीयवचनेन तन्त्रशब्द उक्तार्थे पारिभाषिकस्तथाप्यत्र (तन्त्रशब्देन) सिद्धान्तो गृह्यते 'तान्त्रिको ज्ञातसिद्धान्तः' 'तन्त्रं प्रधाने सिद्धान्ते' इति चामरकोषस्वारस्यप्रामाण्याभ्याम्। तन्त्रदर्शनशास्त्रसिद्धान्तादिकाः शब्दाः प्रायः पर्यायतया व्यवह्रियन्ते। अत एव 'तेन बहुधाकृतं तन्त्रम्'[2]। तेर्थाः[3] कृत्स्नस्य षष्टितन्त्रस्य'। न्यायदर्शनम्। मीमांसाशास्त्रम्॥ शास्त्रदीपिका[4]। सूर्यसिद्धान्तः पञ्चसिद्धान्तिका[5]। इत्यादिस्थलेषु तत्तच्छब्दानां प्रयोगः समुपलभ्यते। दैवं प्राक्कृतं शुभाशुभं कर्म जानातीति दैवज्ञः।

---

१ तननं। तन्यते अनेन वा। तनु विस्तरे। ष्ट्रन् (उ- ४।१५९।) यद्वा तन्त्रणम्। तन्त्र्यते वा। तत्रि धारणे चुरादिः घञ् '३।३।१८,

२ ईश्वरकृष्णकृतसांख्यकारिका ७०

३ ईश्वरकृष्णकृतसांख्यकारिका ७२

४ पार्थसारथिकृता।

५ वराहमिहिराचार्यकृता

तत्रभवानीश्वरकृष्णोऽतीव प्राचीनः। एतत्कृतसांख्यकारिकोपरि ब्रह्मसूत्रभाष्यकर्तृशंकराचार्यस्य परमगुरुणा गौडपादेन भाष्यं व्यधायीति।

एवं दूरदर्श्यादिपदेन दूरदर्शकयन्त्राभिज्ञता द्योत्यते, किंबहुना। एते शब्दा मिथो भिन्नवाच्या अपि सामान्यविवक्षायामेकार्था एव गण्यन्ते। ज्योतिषशब्दस्य स्कन्धत्रये कस्मिंश्चिदेकस्मिन्वा स्कन्धे तदेकदेशे वा व्यवहारदर्शनात्। अत एव भास्कराचार्येण दैवज्ञचूडामणिः, इति विशेषणेन मत्कृतग्रन्थान्ते स्वपिता महेश्वराचार्योऽवर्णि नहि महेश्वराचार्यस्य संहितादि फलितनिबन्धेष्वेव प्रावीण्यमवतिष्ठते इति वक्तुं युज्यते तत एव भास्कराचार्यस्याधीतविद्यत्वात्। एवं सति त्रिस्कन्धज्योतिषवाद्यपि दैवज्ञादिपदेन व्यपदिश्यते। अत एव कृती जयति जिष्णुजो गणकचक्रचूडामणिः,। सांवत्सराचार्यविचार्य नूनम्, इत्यादिपरश्शताः प्रामाणिकप्रयोगाः संगच्छन्ते। अत्रेदमाकूतम्-संज्ञासंज्ञिसंबन्धेन तत्तद्भावान्तरेषु वाच्यार्थतामापन्नानि नामधेयान्यपहाय प्रायः सर्वाणि सामान्यानीति सुगमतरा सरणिः। यथा वैयाकरण-मीमांसक-चिकित्सकादि-पदैर्व्याकरण-मीमांसा-चिकित्सावेदिनो ज्ञायन्ते न तथा पण्डितकोविदसूरिप्रभृतिपदैः केचन नियतोपाधिभाज एव, किंतु सामान्यशब्दशक्तिमहिम्ना सर्वे एवोपस्थाप्यन्ते। कुत्रचित्तु विशेषसंसर्गातिशयेन नियन्त्रितप्रसरा सामान्यशब्दशक्तिर्नान्यत्र गन्तुमलं कर्मीणा। अत एव वैयाकरणपदार्थेन गणकपदार्थो नावबुध्यते।

एतत्संदर्भपर्यालोचनयापि स एवार्थः परिणमति। नहीमे यदृच्छाशब्दा इति वक्तुं युज्यते प्रत्यक्षानुभूयमानस्य योगार्थस्यापलपितुमशक्यत्वात्।

एवंच

'ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कार्त्स्न्योपनयस्य नाममुनिभिः संकीर्त्यते संहिता।
स्कन्धेऽस्मिन्गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होरान्योऽङ्गविनिश्चयश्चकथितः स्कन्धस्तृतीयो परः,

इति श्लोकोक्तस्य प्रमेयस्यात्र सनातनी सत्ता निष्प्रत्यूहैव। केवरमहाशयस्तु होराशास्त्रं हि ग्रीसभाषानुबन्धि नामधेयं वहतीति निश्चिनोति तन्न श्लाघ्यतमां प्रमाणपदवीमारोहति। तथाहि संस्कृतभाषा हि नितान्तं प्राचीनतमा सकलभाषामूर्धन्यभूता चेति निर्विवाद एव। अस्याः पदान्तराणि तत्तद्देशभाषापदतदेकावयवेष्वपभ्रंशादिदोष वशेन संक्रान्तानि प्रायेण नीरक्षीरवन्न झटिति पृथग्भवन्ति, कुत्रचित्तु किंचिदेवोपलक्ष्यन्ते, कुत्रचिदार्थान्तरतां भजन्ति, कुत्रचित्तु स्वरूपान्तरतां शीलयन्ति, कुत्रचिद् घुणाक्षरन्यायेनाविकृतान्यपि वर्तन्ते। अत एव व्याकरणमहाभाष्यस्य पस्पशाह्निके

---

१ अमुमेवाशयमुरीकृत्य तत्रभवान् वराहमिहिराचार्यः स्वनिर्मितायां बृहत्संहिताया द्वितीयाध्यायारम्भे सांवत्सरलक्षणं संकलयांचकार। अमुष्य समयादि निर्णयस्तु गणितगोलाध्याययोर्भूमिकायां प्रकटीकरिष्यते। २ अव्ययम्।

भगवान्पतंजलिः "गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा। गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः" इत्याह। पुनश्च "सर्वे देशान्तरे' इतिवार्तिकमभिलक्ष्यीकृत्य 'सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते न चैत उपलभ्यन्ते। उपलब्धौ यत्नः क्रियताम्। महान्शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयोलोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं, नवधाथर्वणोवेदः, वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः। एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव। एतस्मिश्चातिमहति शब्दस्य प्रयोगविषये तेतेशब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा। शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु। रंहतिः 'प्राच्यमध्येषु गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु,,। इत्याद्याह।

गुर्जराणां वङ्गानांच भाषणवैकल्पमालोक्य काश्यांचित्कविभ्यामिदमुक्तम्—

> 'तुलसी तड़सीजाता मुकुन्दोऽपि मकुंदकः।
> गुर्जराणां मुखं प्राप्य शिवोऽपिशवतां गतः'

इति गुर्जरान्प्रति।

> 'अविदितशषसविशेषा वाणी निःसरति वक्त्रतो येषाम्
> *वदनविवरभेदो रदनैरेवानु मीयते तेषाञ्'

इति वङ्गदेशीयांश्च प्रति।

एतावता स्फुटमवगम्यते यत्खलु एकोऽपि शब्दो नटइव भूमिकन्तरमासाद्य कां कां भंङ्गिमासादयतीति।

एवं सति होराशब्दो ह्यत्रत्य एवास्ति, इतश्च विषयान्तरमगमत्। अमुष्य प्रयोगोऽपि सूर्यसिद्धान्तादिषुप्रत्नतमेषु ग्रन्थेषूपलभ्यते। तथा सूर्यसिद्धान्तस्य भूगोलाध्याये—'होरेशाः सूर्यतनयात्—' इत्यादि। अस्य व्याकरणरीत्या व्युत्पत्तिरेवं भवति—हे लति। हुल्यते वा। हुल हिंसासंवरणयोः। पचाद्यच्। रलयोरेकत्त्वम्। 'रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा। वदन्त्येषांच सावर्ण्यमलंकारविदो जनाः' इति आमाण्यात्। तत्रभवता वराहमिहिराचार्येणाप्यभाणि 'होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्' इति। नन्वस्य यवनाचार्यानुयायित्त्वात्तादृशे होराशब्दव्युत्पादने किं मानमिति चेत् 'पृषोदरादीनि यथोपदिष्टम् ६। ३। १०९।' इतिसूत्रस्थं महाभाष्यमित्य-

---

१ उक्ति प्रत्युक्तिरूपो ग्रन्थः।

वेदे। तथाहि—'पृषोदरादीनि' इत्युच्यते कानि पृषोदरादीनि। पृषोदरप्रकाराणि। कानि पुनः पृषोदरप्रकाराणि। येषु लोपागमवर्णविकाराः श्रूयन्ते न चोच्यन्ते। अथ यथेति किमिदम्। प्रकारवचने थाल्। अथ किमिदमुपदिष्टानीति। उच्चारितानि। कुत एतत्। दिशिरुच्चारणक्रियः। उच्चार्य हि वर्णानाह। उपदिष्टा इमेवर्णा इति। कैः पुनरुपदिष्टाः। शिष्टैः। के पुनः शिष्टाः। वैयाकरणाः कुत एतत्। शास्त्रपूर्विका हि शिष्टिः। वैयाकरणाश्च शास्त्रज्ञाः। यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम्। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। एवं तर्हि निवासतश्चाचारतश्च। सचाचार आर्यावर्त एव। कः पुनरार्यावर्तः प्रागादर्शात्प्रत्यक् कालकवनात्। दक्षिणेन हिमवन्तमुत्तरेण पारियात्रमेतस्मिन्नार्यावर्ते ये ब्राह्मणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारंगताः तत्रभवन्तः शिष्टाः। यदि तर्हि शिष्टाः शब्देषु प्रमाणम्। किमष्टाध्याय्या क्रियते। शिष्टपरिज्ञानार्थाष्टाध्यायी। कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम्। अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं येऽत्र विहिता शब्दाः तान्प्रयुञ्जानं स पश्यति। नूनमस्य दैवानुग्रहः। स्वभावो वा योऽयं न चाष्टाध्यायीमधीते। ये चास्यां विहिताः शब्दाःतांश्च प्रयुंक्ते। नूनमयमन्यानपि जानातीति। एवमेषा शिष्टज्ञानार्थाष्टाध्यायीति' इति।

एवं तत्तद्देशभाषासु प्रायः संस्कृतशब्दास्तदेकदेशा वासंक्रान्ता इतिव्यक्तमेव विचारशीलानाम्। कुत्रचिद्व्यावहारिक संस्कृतसंदर्भेषु देशांतरीयशब्दा उपलभ्यन्ते न खेतावता स्थालीपुलाकन्यायेन कस्मिंश्चिच्छास्त्रे कतिपयान्देशान्तरीयाञ्छब्दानालोच्य तच्छास्त्रमपि देशान्तरीयमिति सिद्धांतयितुं पार्यते सर्वस्यापि व्यवहारस्याकुलीकरण प्रसङ्गात्। यथेदानींतनेऽपिकालेऽनेके महापण्डिता युरोपियग्रंथेभ्योऽभिमतविषयानादाय स्वशास्त्रे निवेशयंति। किमियता मूलभूतस्यापि प्रमेयस्यान्यथात्वं संवृत्तमिति वृत्तमौचित्यविचारचर्यामाविष्करोति।

आचार्यवराहमिहिरेण स्वनिर्मितेषु बृहज्जातकादिषु बहवोग्रीसशब्दा व्यवहृताः। प्रायस्तत्कालमारभ्यात्र तथा ग्रीकशब्दानां व्यवहाराजनि यथेदानीं परः शताः फलितग्रंथा स्तन्मया दृश्यन्ते। किंबहुना, रमलनिबन्धास्तु यावना एव। तदाप्रभृत्येव कृतैरत्रत्यैर मीमांसैः शङ्काव्यत्वमुट्टङ्कितम्।

म्लेच्छाहि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः॥

---

१ आर्या आवर्तन्तेऽत्रेत्यार्यावर्तः, एवं ब्रह्माणो ब्राह्मणा आवर्तन्ते उद्भवन्त्यत्रेति ब्रह्मावर्तः। एतेन सर्वेषामार्यजनानामिदमेव मूलस्थानमिति स्फुटमवगम्यते, तेन आर्यजनानां हिन्दुपदव्यपदेश्यता देशान्तरोद्भवत्वं चेति सांप्रतिकानां सिद्धान्तदूषितः। विस्तरस्तुमत्कृतायां सर्वदर्शन मीमांसाया मवलोकनीयः।

# बीजगणितस्य सूचीपत्रम् ।



# बीजगणितम्

विलासिनामकेन व्याख्यानेनालंकृतम्

जयति जगदमन्दानन्दमन्दारकन्दो
वृजिनशमनबीजं पार्वतीजानिरेकः ।
तदनु विविधविद्यानाटिकासूत्रधारो
जयति भुवनरत्नं काव्यमालाप्रणेता ॥ १ ॥

तातश्रीसरयूप्रसादचरणस्वर्वृक्षसेवापरः
पूज्यश्रीगुरुबापुदेवकरुणापीयूषपूतान्तरः ।
हृत्पद्मभ्रमरायमाणगिरिशो दुर्गाप्रसादः सुधी-
रध्येतृप्रतिभोद्गमाय कुरुते बीजोपरि व्याकृतिम् ॥ २ ॥

अथ तत्र भवान् भास्कराचार्यो ग्रहगणितरूपं सिद्धान्तशिरोमणिं चिकीर्षुस्तदुपयोगितया तदध्यायभूतां लीलावतीनामिकां व्यक्तगणितपाटीं निर्माय तथाभूतं बीजगणितमारभमाणः प्रत्यूहव्यूहनिरासाय शिष्यशिक्षार्थं मङ्गलमादौ निबध्नाति—

उत्पादकं यत्प्रवदन्ति बुद्धे-
रधिष्ठितं सत्पुरुषेण सांख्याः ।

---

१ मदीयगुरुप्रकाण्डं श्रीदुर्गाप्रसादो नाम । येन नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसनच्छन्दोऽलंकारादिसाहित्यसंदर्भाणां संनिवेशविशेषः काव्यमालासंज्ञकं सकलभूवलयप्रसिद्धं मासिकपत्ररत्नं प्रकाश्यते ॥

व्यक्तस्य कृत्स्नस्य तदेकबीज-
मव्यक्तमीशं गणितं च वन्दे ॥ १ ॥

उत्पादकमिति । पद्यमिदमर्थत्रयवाचि । तत्र प्रथमं तावद-व्यक्तपक्षे व्याख्यायते—तद् अव्यक्तं प्रधानं सांख्यशास्त्रे जगत्का-रणतया प्रसिद्धं वन्दे अभिवादये। सांख्याः कापिलाः यद् बुद्धेः मह-त्तत्त्वस्य उत्पादकं जनकं प्रवदन्ति कथयन्ति। ननु प्रधानमचेतनं कथं कार्यमुत्पादयेदित्यत उक्तं पुरुषेणाधिष्ठितं सदिति । यथा हि—कुलालादिना चेतनेनाधिष्ठितं कपालादि घटाद्युत्पादकं तद्व-दित्यर्थः। ते हि पुरुषनिरपेक्षमेव प्रधानमुत्पादकं प्रवदन्ति ।

तदुक्तं श्रीमदीश्वरकृष्णचरणैः—

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य' ॥ ५७ ॥

यथा तृणोदकं गवा भक्षितं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति पुष्टे च वत्से निवर्तते, एवं पुरुषविमोक्षनिमित्तं प्रधानमि-त्यज्ञस्य प्रवृत्तिः' इति तद्भाष्यम् । ननु तादृशे प्रधाने किं प्रमाण-मित्यत आह—कृत्स्नस्य व्यक्तस्यैकबीजमिति। समस्तस्य व्यक्त-स्य कार्यजातस्य एकं बीजं कारणमिति ॥ अथेशपक्षे—अत्र यत्तदो-र्लिङ्गविपरिणामेन यदिति स्थाने यं तदिति स्थाने तं चेति बुद्धि-मता व्याख्येयम्। तमीशं सच्चिदानन्दरूपं वन्दे। सांख्याः, सम्यक् ख्यायते ज्ञायते आत्मा यया सा संख्या आत्माकारान्तःकरणवृ-त्तिः, सा विद्यते येषां ते सांख्याः । आत्मज्ञानिन इत्यर्थः । सत्पु-रुषेण नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमदमादिसं-पत्तिमुमुक्षुत्वेति साधनचतुष्टयसंपन्नेन अधिष्ठितमादरनैरन्त-र्याभ्यां श्रवणविषयीकृतं सन्तं बुद्धेस्तत्त्वज्ञानस्योत्पादकं प्रवद-न्ति। ननु तस्याजनकत्वाद्बुद्धिजनकत्वे मानाभाव इत्यत आह—समस्तस्य व्यक्तस्य एकमसाधारणं बीजमुपादानमित्यर्थः। 'य-

तो वा इमानि भूतानि जायन्ते, तत्सृष्ट्वा तदेवानुप्रविशन्ति ॥ अथ गणितपक्षे—तदव्यक्तं गणितं बीजगणितमिति यावत्। वन्दे। सांख्याः संख्याविदो गणकाः सत्पुरुषेण स्वरूपयोग्येन अधिष्ठितमभ्यस्तं यद् बुद्धेः प्रज्ञायाः उत्पादकं प्रवदन्ति । कीदृशम् । समस्तस्य व्यक्तगणितस्य एकं बीजं मूलमित्यर्थः ॥ उपजातिवृत्तमेतत् ॥ १ ॥

भाषाभाष्य।

सकलभुवनैकहेतुं सेतुं संसारसागरस्यैकम् ।
आर्यापदारविन्दं[1] जितकुरुविन्दं[2] नमस्कुर्मः ॥ १ ॥
श्रीभास्कराचार्यविनिर्मितस्य
विधाय पाटीगणितस्य टीकाम् ।
अथास्य बीजस्य चिकीर्षुरस्मि
भव्याकृति[3] व्याकृतिरत्नमार्याः ॥ २ ॥
प्रणम्य सादरं मूर्ध्ना पित्रोः पादारविन्दयोः ।
दुर्गाप्रसादः कुरुते भाषाभाष्यं मिताक्षरम् ॥ ३ ॥

श्रीमन्महामहोपाध्याय महेश्वराचार्यसुत श्रीभास्कराचार्य ग्रहगणितरूप सिद्धान्तशिरोमणि के बनाने की इच्छा से लीलावतीनामक गणितपाटी को बनाकर बीजगणित की निर्विघ्नसमाप्ति के लिये पाठकजनशिक्षार्थ मङ्गलाचरण करते हैं—

सांख्यशास्त्रसंबन्धी पहिला अर्थ—

सांख्यशास्त्र के जाननेवाले पुरुष करके संनिहित हुए जिसको बुद्धि कहिये महत्तत्त्वका उत्पादक कहते हैं, ऐसा जो संपूर्ण कार्यों का अद्वितीय कारण अव्यक्त अर्थात् सांख्यशास्त्र में संसार का कारण होने से सुप्रसिद्ध प्रधान उसको मैं वन्दना करताहूं ॥

उत्तर मीमांसा (वेदान्त) शास्त्रसंबन्धी दूसरा अर्थ—

आत्मज्ञानी लोग सत्पुरुष अर्थात् साधनसंपन्न पुरुष करके भलीभांति आराधित हुए जिसको बुद्धि कहिये तत्त्वज्ञानका उत्पन्न करनेवाला कहते हैं ऐसा जो ब्रह्माण्डोदरवर्ती घटपटादि कार्योंका असाधारण कारण सच्चिदानन्द स्वरूप ईश्वर उसको मैं वन्दना करता हूं ॥

---

१ गौरीचरणपङ्कजमित्यर्थः । २ कान्त्या तिरस्कृतप्रवालमित्यर्थः । ३ भव्या दोषदानेन रम्या आकृती रचनाविशेषो यस्य तत् । एतावता व्यक्तगणितव्याख्यानतोऽस्यमुष्य प्रागल्भ्यमवगम्यते ॥

४ ब्रह्मही एक नित्य वस्तुहै उससे भिन्न संपूर्ण वस्तु अनित्यहै ऐसा जो विवेचन उसे नित्यानित्य वस्तुविवेक कहते हैं ॥ गन्ध माल्य चन्दन वनिता आदि लौकिक विषय भोग और अमृतपान नन्दनवनक्रीडा आदि पारलौकिक विषयभोग से जो अत्यन्त विरक्ति अर्थात् अलग होना उसे इह-

ज्योतिःशास्त्रसंबन्धी तीसरा अर्थ—

संख्याके जाननेहारे ज्योतिषीलोग सूक्ष्मबुद्धि और परिश्रमशाली पुरुषों करके अभ्यस्त किये हुए जिसको बुद्धि अर्थात् मति का उत्पादक बतलाते हैं ऐसा जो संपूर्ण व्यक्तगणित ( पाटीगणित ) का मूलभूत बीजगणित उसकी मैं बन्दना करता हूं ॥ १ ॥

पूर्वं प्रोक्तं व्यक्तमव्यक्तबीजं
प्रायः प्रश्ना नो विनाऽव्यक्तयुक्त्या ॥
ज्ञातुं शक्या मन्दधीभिर्नितान्तं
यस्मात्तस्माद्वच्मि बीजक्रियां च ॥ २ ॥

इदानीं प्रेक्षावत्प्रवृत्तिहेतुविषयादिचतुष्टयं संगतिं च प्रदर्शयति-पूर्वमिति । यस्माद्धेतोः बीजस्य यावत्तावदादिवर्णकल्पनाभिः क्रियमाणस्य गणितस्य क्रियामितिकर्तव्यतां वच्मि ब्रुवे । यस्माद्व्यक्तं वर्णकल्पनानिरपेक्षं गणितं पूर्वं प्रोक्तम् । ततः किमित्यत आह—अव्यक्तबीजमिति । अव्यक्तं बीजगणितं मूलं यस्य तत् । तथा च पूर्वं प्रोक्तमपि व्यक्तं तावत्सम्यक्तया न ज्ञायते यावद्बीजक्रिया नोपपद्यते । तर्किं व्यक्तज्ञानार्थमेवारम्भो न चेत्याह— यस्माच्च सुधीभिः प्राज्ञैरव्यक्तयुक्त्या विना प्रश्नाः प्रायो ज्ञातुं नो शक्याः । मन्दधीभिस्तु नितान्तं ज्ञातुमशक्या एवेत्यर्थः।प्रश्नाश्चात्र सिद्धान्तशिरोमण्युक्ताः । इतरे च पृच्छकेच्छावशादपि ज्ञातव्याः । अत्र बीजक्रियां वच्मीति वदता आचार्येण एकवर्णसमीक-

---

मुत्रफलभोगविराग कहते हैं ॥ तत्त्वज्ञान के सहायक जो श्रवण मनन आदि विषय उन्हें छोड़ और विषयों से जो मनोवृत्तिको रोकना उसको शम कहते हैं । तत्त्वज्ञान के साधन श्रवण मननादिकोंको छोड़कर शब्दादि विषयों में प्रवृत्तहुए जो कर्णादि बाह्येन्द्रिय सो जिस वृत्तिकरके निवृत्तहों उसे दम कहते हैं । तत्त्वज्ञानके सहयोगी जो श्रवण मननादि उन्हें छोड़ शब्दादि विषयोंसे जो बाह्येन्द्रिय का उपराम उसे उपरति कहते हैं । अथवा, भलीभांति भोगेहुए गन्ध माल्य चन्दन वनिता प्रभृति विषयों का चतुर्थाश्रम ( संन्यास ) अङ्गीकार करने से जो परित्याग उसे उपरति कहते हैं । शीत और उष्ण इनकी जो सहनशीलता उसको तितिक्षा कहते हैं । शब्दादि विषयों से रोकेहुए मनका तत्त्वज्ञानोपकारक श्रवण आदिकों में जो समाधि उसे समाधान कहते हैं। गुरु और वेदांत वाक्यों में जो निश्चल विश्वास उसे श्रद्धा कहते हैं ॥ मोक्ष विषयक जो इच्छा उसको मुमुक्षुता कहते हैं । नित्यानित्यवस्तुविवेक, इहामुत्रफलभोगविराग, शम आदि छः पदार्थ और मुमुक्षुता ये चार साधन वेदान्तमें प्रसिद्ध हैं ॥

णानेकवर्णसमीकरणमध्यमाहरणभावितरूपभेदचतुष्टयाभिन्नं
गणितं विषयत्वेन प्रदर्शितम् । तदुपयुक्ततया धनर्णषड्विधखषड्वि-
धवर्णषड्विधकरणीषड्विधकुट्टकवर्गप्रकृतिचक्रवालान्यपि विषयत्वे-
न प्रदर्शितानि । विषयस्य शास्त्रस्य च प्रतिपाद्यप्रतिपादकभावः
संबन्धोऽपि बीजक्रियां वच्मीत्यनेन दर्शितः । प्रयोजनं तु प्रश्नो-
त्तरार्थज्ञानं गोलज्ञानं च , परम्परया जगतः शुभाशुभफलादे-
शश्च । अध्येतॄणां धर्मार्थकामप्राप्तिश्च वेदाङ्गत्वादिति । शा-
लिनीवृत्तमेतत् ॥ २ ॥

अब पाठकजनोंकी प्रवृत्तिके लिये विषय, संबन्ध, प्रयोजन, अधिकारी
और ग्रन्थसंगति कहते हैं—

अव्यक्त अर्थात् बीजगणितहै मूल जिसका ऐसा व्यक्त कहिये लीलावती-
नामक पाटीगणित पहिले कहा, पर प्रायः बीजगणित की युक्तिविना प्रश्न नहीं
जाने जाते और मन्दबुद्धि करके तो किसी भांति नहीं जाने जाते इसलिये
अब मैं बीजगणित की क्रिया (रीति) को कहताहूं। यहांपर एकवर्णसमीकरण,
अनेकवर्णसमीकरण,मध्यमाहरण,भावित और इन्होंके उपयोगी धनर्णषड्विध,
खषड्विध,वर्णषड्विध,करणीषड्विध,कुट्टक,वर्गप्रकृति और चक्रवाल ये विषयहैं ।
विषय और शास्त्रका प्रतिपाद्य प्रतिपादक भावसंबन्धहै अर्थात् विषय प्रतिपाद्य
( कथन करने के योग्य ) हैं और शास्त्र ( बीजगणित ) प्रतिपादक अर्थात् उक्त
विषयोंका निरूपण करनेवालाहै।प्रश्नोत्तरका ज्ञान गोलका ज्ञान और संसार
का शुभाशुभ फलादेश करना यह प्रयोजन है । शास्त्र के मुख्य अधिकारी ब्राह्म-
ण, क्षत्रिय और वैश्य हैं क्योंकि ग्रन्थकारने गणिताध्यायके प्रारम्भ में कहाहै—

‘ तस्माद् द्विजैरध्ययनीयमेतत्
पुण्यं रहस्यं परमं च तत्त्वम् ॥ ’

## धनर्णसंकलने करणसूत्रं वृत्तार्द्धम्—

योगे युतिः स्यात्क्षययोः स्वयोर्वा
धनर्णयोरन्तरमेव योगः ॥

अथ धनर्णसंकलनं तावदुपजातिकापूर्वार्धेनाह—योगे युति-
रिति । क्षययोः ऋणयोः स्वयोर्धनयोर्वा योगे कर्तव्ये युतिः स्या-
त्। अस्यायमभिप्रायः—ययो राश्योर्योगो विधेयोऽस्ति तौ रूपा

त्मकौ वर्णात्मकौ करण्यात्मकौ वा स्यातां तर्हि तयो राश्योः 'कार्यः क्रमादुत्क्रमतोऽथ वाङ्कयोगः—' इति व्यक्तोक्तरीत्या योगः कार्यः स एवात्र योगः स्यात् । करण्योस्तु योगोऽन्तरं वा 'योगं करण्यो-र्महतीं प्रकल्प्य—' इत्यादिवक्ष्यमाणप्रकारेण विधेयम् । एवं बहू-नामपि । इत्थं सजातीययोगोऽवधेयः । यत्र त्वेकराशिर्धनमपर ऋणं तयोर्योगे कर्तव्ये किंकरणीयमित्याह—धनर्णयोरन्तरमेव योग इति। उर्वरितस्य धनर्णत्ववशाद्युतेरपि धनर्णत्वमवसेयम् ॥

जोड़ने का प्रकार—

धन अथवा ऋण जो दो राशि होवें उनका व्यक्तगणितकी रीति से योग करो वही यहां योग होगा । जो एक राशि धनहो और दूसरा ऋण तो भी व्य-क्तगणितके प्रकार से उनका अन्तर करो और उसीको यहांपर योग जानो । यदि राशि करणी होवें तो 'योगं करण्योर्महतीं प्रकल्प्य—' इसवक्ष्यमाण ( आगे जो कहाजायगा ) प्रकार से उनका योग और अन्तर करो । यहां शेषधन बचै तो धन और ऋण बचै तो ऋण जानो ॥

उपपत्ति—

( अ ) ने ( क ) से तीनि रुपये ऋण लिया, फिर चाररुपये ऋण लिया इसप्रकार (अ) ने सात रुपये ऋण लिया। फिर (अ) को तीनरुपये एकजघे और चाररुपये दूसरी जघे इसप्रकार सात रुपये मिले परं च धन कुछ नहीं बचा क्यों-कि सातरुपये ऋण लियाथा । अब जो ( अ ) चार रुपये ऋणकरै और तीन रुपये अर्जन ( पैदा ) करै तो उसके एक रुपया ऋण रहैगा । यदि चार रुपये अर्जन करै और तीन रुपये ऋणकरै तो अवश्यही एकरुपया धन रहैगा इस्से 'योगे युतिः—' यह सूत्र उपपन्न हुआ ॥

उदाहरणम्——

रूपत्रयं रूपचतुष्टयं च
क्षयं धनं वा सहितं वदाशु ।
स्वर्णं क्षयं स्वं च पृथक् पृथङ् मे
धनर्णयोः संकलनामवैषि ॥ १ ॥

अत्र रूपाणामव्यक्तानां चाद्याक्षराण्युपलक्षणार्थं लेख्यानि यानि ऋणगतानि तान्यूर्ध्वबिन्दूनि च ॥

न्यासः। रू ३̇ रू ४̇ योगे जातम् रू ७̇
न्यासः। रू ३ रू ४ योगे जातम् रू ७
न्यासः। रू ३ रू ४̇ योगे जातम् रू १̇
न्यासः। रू ३̇ रू ४ योगे जातम् रू १

एवं भिन्नेष्वपि

इति धनर्णसंकलना।

---

उदाहरण—

तीन ऋण, चार ऋण वा तीन धन चार धन, वा तीन धन चार ऋण, वा तीन ऋण और चार धन इनका योग अलग अलग बतलाओ ॥

यहां भली भांति मालूम पड़ने के लिये रूप और अव्यक्तराशिके आदिके अक्षर लिखते हैं। जैसे 'रूप' इसको रू और 'अव्यक्त राशि यावत्तावत्' इत्यादि-कोंको या इत्यादि....ऋण राशिके मस्तकपर एकविन्दुका चिह्न देते हैं। जैसा— रू १̇....। रूप उस राशि को कहते हैं कि जिसका मान ज्ञात ( मालूम ) हो और अव्यक्त राशि वह कहलाता है कि जिसका मान अज्ञात ( न मालूम ) हो। देखो कि 'रू ३̇ रू ४̇' इस पहिले उदाहरणमें रूप तीन तथा रूप चार ऋणहैं इसलिये इनके शिरपै विन्दुका चिह्न लगाया गयाहै अब इन दोनोंका योग उक्त प्रकार से रूप सात ऋण होताहै रू ७̇ ऐसाही आगे भी जानो ॥

( १ ) न्यास। रू३̇ रू४̇। इनका योग रू७̇ हुआ।
( २ ) न्यास। रू३ रू४। इनका योग रू७ हुआ।
( ३ ) न्यास। रू३ रू४̇। इनका योग रू१̇ हुआ।
( ४ ) न्यास। रू३̇ रू४। इनका योग रू१ हुआ।

इसी प्रकार भिन्नाङ्कों का भी योग कियाजाताहै परंतु वहां समच्छेद विधि का स्मरण रखना चाहिये ॥

जोड़ने का प्रकार समाप्त हुआ।

---

धनर्णव्यवकलने करणसूत्रं वृत्तार्धम्-

संशोध्यमानं स्वमृणत्वमेति
स्वत्वं क्षयस्तद्युतिरुक्तवच्च ॥ ३ ॥

अथ धनर्णव्यवकलनमुपजात्युत्तरार्धेनाह—संशोध्यमानमिति। संशोध्यते अपनीयते यत्तत्संशोध्यमानम् रूपं वर्णः करणी चेति त्रिलिङ्गी। सामान्यान्नपुंसकत्वम्। तद्यदि धनमस्ति तर्हि ऋण-त्वमेति, यदि क्षयोऽस्ति तर्हि धनत्वमेति। पश्चादुक्तवद्योगश्च। अस्यायमभिप्रायः--ययोरन्तरं कर्तव्यमास्ते तयोर्मध्ये संशोध्यमा-नस्य धनर्णतावैपरीत्यं विधाय 'योगे युतिः स्यात्–' इत्यादिना तयोर्योगः कार्यस्तदेव व्यवकलनफलमवधेयम्॥ ३॥

घटाने का प्रकार—

जो राशि घटाया जाता है उसको संशोध्यमान कहते हैं। वह संशोध्यमान ( घटने वाला ) राशि धनहोतो ऋण और ऋण हो तो धन होजाता है बाद उन का योग 'योगे युतिः स्यात्—' इस कहेहुए प्रकार से करो॥

उपपत्ति—

( अ ) के धन सात रुपयों से धनतीन रुपया घटाना है तो सातरुपयों का स्वरूप 'रू ४ रू ३' यहहुआ। अब इसमेंसे तीन रुपया घटादिया तो शेष 'रू४' रहा। इसीप्रकार ऋण सात रुपयों से ऋण तीन रुपया घटाना है तो सातरुपयों का स्वरूप 'रू ४̇ रू ३̇' यहहुआ। इसमें तीन रुपया जोड़ दिया तो शेष 'रू ४̇' रहा। यह बात संशोध्यमान राशिके वैपरीत्य से सिद्ध होती है। इसी प्रकार धन सात रुपयों से ऋण तीन रुपया घटाना है तो धन सात रुपयों का स्वरूप 'रू १० रू ३̇' यहहुआ। इसमें तीन रुपये जोड़देने से अन्तरकी सिद्धि होती है तो यहां भी संशोध्यमान राशिका वैपरीत्य सिद्धहुआ। इसीप्रकार ऋण सात रुपयों से धन तीन रुपयाघटाना है तो ऋणसात रुपयोंका स्वरूप 'रू १०̇ रू ३' यहहुआ इसमें तीन रुपया घटा दिया तो 'रू १०̇' यह अन्तरहुआ यहांपर भी संशोध्यमान राशि का वैपरीत्य सिद्धहुआ। ऐसाही सर्वत्र जानो इससे 'संशो-ध्यमानं स्वमृणत्वमेति' इसप्रकार की उपपत्ति स्पष्ट प्रकाशित होती है॥ ३॥

उदाहरणम्—

त्रयाद् द्वयं स्वात्स्वमृणादृणं च
व्यस्तं च संशोध्य वदाशु शेषम्॥

न्यासः। रू ३ रू २ अन्तरे जातम् रू १।

न्यासः। रू ३̇ रू २̇ अन्तरे जातम् रू १̇।

---

१ वैपरीत्य अर्थात् उलटापन जैसे कोई संख्या धन हो तो ऋण और ऋण हो तो धन।

अथ प्रसङ्गादास्माकीनेषु ज्योतिषग्रन्थेषु लब्धव्यवहाराणां केषांचनय वनशब्दानामिह तल्लिपिवर्णन्यासपुरःसरं संनिवेशः क्रियते—

| | |
|---|---|
| मुंथहा [ ही ] | منتهى |
| इंथिहा | انتها |
| संहम | سهم |
| गैरिक़बूल | غيرقبول |
| क़बूल | قبول |
| मुसरिफ़ | مصرف |
| इसराफ़ | إصراف |
| मुत्थशिल | متصل |
| इत्थशाल | إتصال |
| इंदुवार | ادبار |
| इक़बाल | إقبال |
| मुसल्लह | مصالحه |
| हद्द [ द्दा ] | حد |
| तश्ली | تثليث |
| तस्दी | تسديس |
| तरबी | تربيع |

एवं बहुवक्तव्यमस्ति परमवसराभावादद्य विरम्यते ।

अथ प्रकृतं प्रस्तूयते—तच्च बीजगणितं सिद्धान्तशिरोमणेस्तृतीयाध्याय इति विश्वरूपापरनामक श्रीमुनीश्वरदैवज्ञानांमतम् । द्वितीयाध्याय इति तु मया लीलावतीभूमिकायां प्रतिपादितम् । अस्मिन्बीजे ब्रह्मगुप्त—श्रीधर—पद्मनाभानां नामधेयान्युपलभ्यन्ते । तत्र ब्रह्मगुप्तः

असावाचार्यवर्यो नखेषु ( ५२० ) मिते शालिवाहनशके प्रादुरभवत् । श्री चापवंशतिलकस्य श्रीव्याघ्रमुखनामधेयस्य राज्ञो राज्यसमये व्योमबाणशर ( ५५० ) संमिते शके विष्णुधर्मोत्तरपुराणान्तर्वर्तिब्रह्मसिद्धान्तानुसारेण ब्रह्मसिद्धान्तनाम्नैव स्वसिद्धान्तमकार्षीदिति तत्कृतब्रह्मसिद्धान्तस्य चतुर्विंशाध्यायस्थाभ्यां सप्तमाष्टमाभ्यामार्यावन्धाभ्यां स्फुटमवगम्यते । तथाहि—

'श्रीचापवंशतिलके श्रीव्याघ्रमुखेशकनृपाणाम् [ लात् ] ।
पञ्चाशत्संयुक्तैर्वर्षशतैः पञ्च [ भि ] रतीतैः ७ ॥
ब्राह्मःस्फुटसिद्धान्तः सज्जनगणितज्ञगोलवित्प्रीत्यै ।
त्रिंशद्वर्षेण कृतोजिष्णुसुतब्रह्मगुप्तेन ॥ ८ ॥' इति ।

अस्य पिता जिष्णुसंज्ञ आसीदित्यपि पूर्वोक्तार्यया 'कृती जयति जिष्णुजो

गणकचक्रचूडामणिः—' इति प्रकृतग्रन्थकारोक्त्या च निर्विवाद एव । अस्य नामांते गुप्तपदश्रवणादसौ वैश्यजातीय इति शङ्का न विधेया ब्राह्मणजातिष्वपि गुप्तपदस्य व्यवहारदर्शनात् । काश्मीरकब्राह्मणेषु तु गुप्तसंज्ञया व्यवहारः सुप्रसिद्ध एव । तथा—अभिनवगुप्तः, नृसिंहगुप्तः, वराहगुप्तः, वसुगुप्तः' इत्यादि। चन्द्रगुप्तोपाध्यायस्य कौटिल्यापरनामधेयस्य चाणक्यस्य 'विष्णुगुप्तः' इत्यपि नामान्तरमासीत् । चाणक्यस्य विष्णुगुप्ताभिधानत्वब्राह्मणत्वे 'राक्षसः। भो विष्णुगुप्त, कुतः संदेहः, इत्यादि सप्तमाङ्कस्थेन 'चाणक्यः । वत्स, श्रोत्रियाक्षराणि प्रयत्नलिखितान्यपि नियतमस्फुटानि भवन्ति, इत्यादि प्रथमाङ्कस्थेनच मुद्राराक्षस वाक्येन स्पष्टतरे भवतः ।

एवंच काश्मीरको भवेदन्यदेशीयो वा परं ब्राह्मणतायां तु न संदेहः ।

घुणाक्षरन्यायेनैव यदितत्र गुप्तपदं स्यात्तदपि कोवेद ।

एतस्य सर्वोत्कृष्टत्वं पृथूदकस्वामिनैतत्कृतब्रह्मसिद्धान्तटीकायामादौ—

'यत्सूक्ष्मं गतिवित्तये व्यरचयं शास्त्रं ग्रहाणामहं
तस्योच्छित्तिरिहास्तिविस्तरभयान्माभूदितीवात्मभूः ॥
संक्षिप्तीकरणाय जिष्णुतनयव्याजेन यस्मादभू
त्तस्मादेव च तत्त्वबोधनिपुणास्तंब्रह्मगुप्तं जगुः ॥,

इति द्वितीयश्लोकेन प्रदर्शितम् । एतत्कृतसिद्धान्तस्य 'ब्राह्मस्फुटसिद्धान्तः–, इति लेखेन 'ब्राह्मस्फुटसिद्धान्तः' इति नाम नावधेयं प्रत्यध्यायान्ते '—ब्रह्मसिद्धान्ते—' इति लेखस्योपलम्भात् । ब्रह्मसिद्धान्तस्य मुखबन्धस्त्वयम्—

तत्रादर्शपाठः—

'जयतिप्रणतःसुरासुरमौलिरत्नप्रभाक्षुरितपादः ।
कर्तारोजगदुत्पत्तिस्थितिविलयानांमहादेवः ॥,

शोधितपाठः—

'जयति प्रणतसुरासुरमौलीरत्नप्रभाछुरितपादः ।
कर्ता जगदुत्पत्तिस्थितिविलयानां महादेवः ॥ ,

---

[१] ब्रह्मसिद्धान्तभाष्यकर्तुः पृथूदकस्वामिन एव 'चतुर्वेदाचार्यः' इति नामान्तरमिति सिद्धान्तसुन्दरटीकायां चिन्तामणिः । अथ 'तथा च ब्रह्मसिद्धान्तभाष्ये—'इत्यादिना 'इति चतुर्वेदेनाप्यनध्यवसायो प्रकृतः' इत्यन्तेन 'ये चाव प्रतमगणाः—' इति श्लोकस्यवासनाभाष्यलेखेन 'ब्रह्मगुप्तकृतिरत्र सुंदरी—'इति श्लोकस्य वासना भाष्यलेखेन च चतुर्वेदस्य ब्रह्मसिद्धान्तभाष्यकर्तृता ब्रह्मगुप्तसिद्धान्तस्य ब्रह्मसिद्धान्तनामता च निर्विवादमवसीयते ।

'ब्रह्मोक्तंग्रहगणितंमहताकालेनयत्खेचरी [यत्खिली]भूतम्।
अभिधीयते स्फुटं तज्जिष्णुसुतब्रह्मगुप्तेन ,॥ इति।

श्रीधरः

एतस्य गणिते त्रिशती, न्याये न्यायकन्दलीति कृतिद्वयमत्रोपलभ्यते। तत्र वाचस्पतितनूभवो लक्ष्मीदासस्त्रिशतीतो बहूनि सूत्राण्यादाय लीलावतीव्याख्यारूपे तत्त्वचिन्तामणिभागे व्यलिखत्कानिचित्सूत्राणि व्याख्यत्सूत्रावतरणिकायामाचार्यनामधेयमगृह्णाच्च। भास्कराचार्योऽपि 'अत्र श्रीधराचार्यसूत्रम्—'चतुराहतवर्गसमैः—'इत्यनेन मध्यमाहरणादौ '—श्रीधर—' इतिश्लोकेन भावितान्तेचामुष्यनाम गृहीतवान। अथ च त्रिशतीप्रारम्भे—

' नत्वा शिवं स्वविरचितपाटीगणितस्य सारमुद्धृत्य।
लोकव्यवहाराय प्रवक्ष्यति श्रीधराचार्यः॥,

इति लेखो दृश्यते। तेन कश्चिदपरोऽप्येतन्निर्मितः पाटी ग्रन्थो वर्तते यस्य सारभूतेयं त्रिशतीति स्फुटमेवावगम्यते।

न्यायकन्दल्याः प्रारम्भे—

'अनादिनिधनं देवं जगत्कारणमीश्वरम्।
प्रपद्ये सत्यसंकल्पं नित्यविज्ञानविग्रहम्॥
ध्यानैकतानमनसो विगतप्रचाराः
पश्यन्ति यं कमपि निर्मलमद्वितीयम्।
ज्ञानात्मने विघटिताखिलबन्धनाय
तस्मै नमो भगवते पुरुषोत्तमाय॥,

ग्रन्थारम्भेऽभिमतां देवतां शास्त्रस्य च प्रणेतारं गुरुं श्लोकस्य पूर्वार्धेन नमस्यति—प्रणम्येति।, इति

उपसंहारे च—

'सुवर्णमयसंस्थानरम्या सर्वोत्तरस्थितिः।
सुमेरोः शृङ्गवीथीव टीकेयं न्यायकन्दली॥
अक्षीणनिजपक्षेषु ख्यापयन्ती गुणानसौ।
परप्रसिद्धसिद्धान्तान्दलति न्यायकन्दली॥
आसीद्दक्षिणराढायां द्विजानां भूरिकर्मणाम्।
भूरिसृष्टिरिति ग्रामो भूरिसृष्टिजनाश्रयः॥

अम्भोराशेरिवैतस्मादुद्बभूव क्षितिचन्द्रमाः।
जगदानन्दनाद्वन्द्यो बृहस्पतिरिव द्विजः॥
तस्माद्विशुद्धगुणरत्नमहासमुद्रो
विद्यालतासमवलम्बनभूरुहोऽभूत्।
स्वच्छाशयो विविधकीर्तिनदीप्रवाह-
स्पन्त-सम्पदुद्बलो बलदेवनामा॥

तस्याभूद्भूरियशसो विशुद्धकुलसंभवा।
अब्बोकेत्यर्चितगुणा गुणिनो गृहमेधिनी॥
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः।
तस्याः श्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत्॥
असौ विद्याविदग्धानामसूत श्रवणोचिताम्।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम्॥
त्र्यधिकदशोत्तरनवशतशाकाब्दे न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेषा॥,

इति श्लोका उपलभ्यन्ते। ततश्चादो वृत्तमवतरति—अयमाचार्यो दक्षिण राढान्तर्गतभूरिसृष्टिग्रामे बलदेवादब्बोकायां गृहीतजन्मा रामेन्दुनन्द (९१३) मिते शालिवाहनशके श्रीपाण्डुदासप्रार्थनया न्यायकन्दलीं प्राणैषीत्।

तदानींतने काले राढा बाढं प्रसिद्धतमासीत्, यतोऽस्याः

'गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी,

इत्यादि प्रबोधचन्द्रोदयीये श्लोके 'अहङ्कारः। आः पाप, अस्माभिरपि दक्षिणराढाप्रसिद्धशुद्धिभिरिदमासनमनाक्रमणीयम्, इति गद्ये च तथा—

गाढा त्वया सपदि राढापुरी वसुनिबाढावबद्धमतिना

इत्यत्रवधाट्यां चाभिख्या वर्तते।

एका कन्दली तु मुरारिविरचितस्यानर्घराघवस्य पञ्चमाङ्के "-वैशेषिक कटंदी (कन्दली)—" इति वाक्येन सूच्यते। रुचिपत्युपाध्यायेन व्याख्या-यते चैवम्—"कटंदी वैशेषिकशास्त्रव्याख्याग्रन्थः। 'कटंद' इति यस्य प्रसिद्धिः। सा च रावणकृतेति च्छलतो ज्ञापयति। 'कन्दली' इति पाठे कन्दली वैशेषिक टीका सापि रावणकृता" इति।

## पद्मनाभः

अस्याचार्यस्य देशकालौ न ज्ञायेते।

अथ संप्रति भारतवर्षेऽमुष्यैव बीजगणितस्य पठनपाठनादौ प्रचुरः प्रचारो विद्यते । अन्ये बीजग्रन्थास्तु प्रायो नष्टा एव जाताः । ये द्वित्रा वर्तन्ते तेऽपि क्वचिदेवोपलभ्यन्ते। अस्य बीजस्योपरि बहवो व्याख्याग्रन्था आसते । तेषु सांप्रतमेते ज्ञायन्ते—

(१) नवाङ्कुरः, कृष्णदैवज्ञनिर्मितः ।
(२) बीजभाष्यम् , सूर्यदैवज्ञविरचितम् ।
(३) बीजगणितप्रबोधः, रामकृष्णप्रणीतः ।
(४) बीजविवृतिकल्पलता, परमसुखकल्पिता ।
(५) बीजगणितोदाहरणम् , कृपारामकृतम् ।
(६) बीजोदाहरणम्, भास्करविहितम् ।

तत्र नवाङ्कुरो निजगुणगरिम्णा सर्वानेव व्याख्याग्रन्थानधरीकरोति । यस्य मुखबन्धोऽयम्—

शिवयोर्भजनातिगौरवाद्य—
त्सुतलीलाधृतकुञ्जरास्यरूपम् ।
अपहन्तु ममान्तरं तमस्त—
त्सततानन्दमयं महो महीयः ॥

यदीयचरणाम्भोजस्मर्तुः सकलसिद्धयः ।
भवन्ति वशवर्तिन्यः सिद्धेशीं तां भजामहे ॥

मिहिरमिव वराहमिहिरं
वन्दे संदेहभेदिनं जगताम् ।
ज्योतिश्चक्रविभावन—
जगदेकचक्षुरक्षुद्रम् ॥

कविबुधजनमूर्धनि स्फुरन्तं
कविबुधसंततसेवनीयपार्श्वम् ।
गणितनिपुणतां प्रवर्तयन्तं
प्रणमत भास्करमीप्सितार्थसिद्ध्यै ॥

कदापि नैव संभ्रमः स्थितश्च भौममण्डले ।
अपूर्वमार्गमाश्रयञ्जयत्यपूर्व—भास्करः ॥

आसीदसीमगुणरत्ननिधानकुम्भः
कुम्भोद्भवाभरणदिग्ललनाललाम ।

आशैशवार्जितविशेषकलानुवर्ती
श्रीकेशवः सुगणितागमचक्रवर्ती ॥
तस्मादभूद्द्विजनभूषणभूतमूर्तिः
श्रीमानगण्यगुणगौरवगेयकीर्तिः ।
ज्योतिर्विदागमगुरुर्गुरुसंप्रदाय—
प्रज्ञातशास्त्रहृदयः सदयो गणेशः ॥
भ्रातुः सुतस्तस्य यथार्थनामा
नृसिंह इत्यद्भुतरूपशोभः ।
अवर्धयद्यो जगतामभीष्टं
प्रह्लादमाश्चर्यकरः सुराणाम् ॥
तच्छिष्यो विष्णुनामा स जयति जगतीजागरूकप्रतिष्ठः
शिष्टानामग्रगण्यः सुभणितगणिताम्नायविद्याशरण्यः ।
यद्वक्त्रोन्मुक्तमुक्ताफलविमलवचोवीचिमालागलन्तो
द्वित्राः सिद्धान्तलेशा जगति विदधतेऽज्ञेऽपि सर्वज्ञभावम् ॥
तस्मादधीत्य विधिवत्त्रिस्कन्धं ज्योतिषं गुरोः ।
कृष्णो दैवविदां श्रेष्ठस्तनुते बीजपल्लवम् ॥
अव्यक्तत्वादिदं बीजमित्युक्तं शास्त्रकर्तृभिः ।
'तद्व्यक्तीकरणं शक्यं न विना गुर्वनुग्रहम् ॥'

अन्तस्त्वयम्—

'अभूत्पृथिव्यां प्रथितो गुणौघै—
श्चिन्तामणिर्दैवविदां वरिष्ठः ।
संपूजनानेहसि यस्य गौरी
स्मृता स्तुता प्रत्यहमाविरासीत् ॥
तत्सूनवः पञ्च बभूवुरेषां
ज्येष्ठोऽभिरामः किल रामनामा ।
भविष्यदर्थज्ञतया हि यस्य
विदर्भराजोऽपि निदेशवर्ती ॥

---

१ अयं श्लोकः कस्मिंश्चित्पुस्तके नोपलभ्यते ।

रामादभूतां सीतायां पुत्रौ कुशलवाविव।
त्रिमल्लो गोपिराजश्च गुणैः सर्वैः समन्वितौ॥
त्रिमल्लसूनुर्जयति द्विजेन्द्रो
वल्लालसंज्ञः शितिकण्ठभक्तः।
यःसंततं रुद्रजपातिसक्ता-
द्ब्राह्मं महो मूर्तमिवावभाति॥
दैवज्ञवर्यगणसंतत सेव्यपार्श्व-
वल्लालसंज्ञगणकस्य सुतोऽस्ति कृष्णः।
रामानुजः स परमेश्वरतुष्टिहेतो---
र्वीजक्रियाविवृतिकल्पलतामकार्षीत्॥
यद्भास्करेण निजधामगुणातिरेका---
त्संपादितं सगुणवर्गवलं हि वीजम्।
तत्कृष्णभूमिमधिगम्य विचारवारि---
संसिक्तमङ्कुरजनुष्यभवत्समर्थम्॥
यैर्यैःश्रमैर्विरचितोऽस्ति नवाङ्कुरोऽसौ
तेषामभिज्ञ इह कः परमात्मनोऽन्यः।
इत्थं विचिन्त्य जगदीश तवैव तुष्ट्यै
सर्वज्ञ ते चरणयोर्निहितस्ततोयम्॥, इति।

अथायं नवाङ्कुरो निजागणितगुणगणगरिम्णा सर्वानेव व्याख्याग्रन्थान धरीकुरुते। अस्य प्रणेता वल्लालदैवज्ञतनूभवो विष्णुदैवज्ञाधीतज्योतिःशास्त्रो जहँगरिशाहमुख्यसांवत्सरो वाराणसेयः श्रीकृष्णदैवज्ञः सुप्रसिद्ध एव। यद्यप्येतेन महात्मनात्र स्वसमयो न प्रादर्शि तथापि रङ्गनाथस्य ज्येष्ठभ्रातृत्वात्तत्काल एवास्यापि कालः। स च

'शके (१५२५) तत्त्वतिथ्युन्मिते चैत्रमासे
सिते शम्भुतिथ्यां बुधेऽर्कोदयान्से।
दलाढ्याद्रिनाराचनाडीषु जातौ
मुनीशार्कसिद्धान्तगूढप्रकाशौ॥,

इति रङ्गनाथदैवज्ञरचितस्य गूढप्रकाशाख्यस्य सूर्यसिद्धान्तटिप्पणस्यो संहृतिश्लोकान्निर्विवादमवगम्यते।

अथैतत्कुलस्य ज्ञानार्थं मेतत्कनिष्ठभ्रातृ--रङ्गनाथदैवज्ञ रचितंस्ववंशवर्णनमपि प्रदर्श्यते--

भागीरथीतीरसंस्थे शंभोर्वाराणसीपुरे ।
बल्लालगणको रुद्रजपासक्तोऽभवद्बुधः ॥
तस्यात्मजाः पञ्चगुणाभिरामा
ज्येष्ठः स रामः सकलागमज्ञः ।
येनोपपत्तिः स्वधिया नितान्तं
प्रकाशितानन्तसुधाकरस्य ॥
ततः स कृष्णो जहँगीरसार्व—
भौमस्य सर्वाधिगतप्रतिष्ठः ।
श्रीभास्करीयं विवृतं तु येन
बीजं तथा श्रीपतिपद्धतिः सा ॥
गोविन्दसंज्ञस्तु ततस्तृतीय—
स्तस्यानुजोऽहं गुरुलब्धविद्यः ।
विश्वेशपत्पद्मनिविष्टचेताः
काशीनिवासी सकलाभिमान्यः ॥
श्रीरङ्गनाथोऽर्कमुखोत्थशास्त्रे
गूढप्रकाशाभिधटिप्पणं सः ।
कृत्वा महादेव बुधाग्रजोऽथ
विश्वेश्वरायार्पितवान्सुवृद्ध्यै ॥ इति ।

चिन्तामणिः
|
रामः
|
सीता ( पत्नी )
|
गोपिराजः । त्रिमल्लः
|
बल्लालः
|
रामः । कृष्णः । गोविन्दः । रङ्गनाथः । महादेवः ।
|
विश्वरूपापरनामा मुनीश्वरः ।

कृष्णदैवज्ञकृत ग्रन्थास्त्वेते -

( १ ) नवाङ्कुरः।

( २ ) श्रीपतिपद्धतिव्याख्या सोदाहृतिः।

( ३ ) छादकनिर्णयः ( स्त्रीपुंससंवादरूपोऽष्टाशीतिपद्यात्मकः पुष्पवन्तोपरागतिरोधायकनिर्णायको निबन्धः )

एवमुक्तानुक्तव्याख्यामपञ्चोत्तानीभूतप्रभूतमगेयांशमपि बीजगणितं धूसरवंशावतंसस्य लक्ष्मणपुरपयोधिचन्द्रायमाणस्य श्रीमन्मुंशीनवलकिशोरमहोदयस्याभ्यर्थनया गतानुगतिकन्यायेन मयापि व्याकारितत्र सर्वोजनोपकाराय विलासिसंज्ञेन संस्कृतव्याख्यानेन सर्वेषां सूत्राणामुदाहरणानां चान्यन्तोपयोगिव्याकरणकोशादिप्रमाणोपन्यासपुरःसरंव्याकृतिः' भाषाभाष्यनामकेन विवरणेन सूत्राणामक्षरार्थ उदाहरणानां गणितप्रदर्शनं चोपपत्तिपरिष्कारपूर्वकं न्यासि। स्थलविशेषेच मूलस्थस्य टीकास्थस्य वा पदस्योपरि टिप्पण्यपि व्यधायि।

ग्रन्थान्ते प्राचीनानां नवीनानां च प्रश्नरत्नानां मञ्जूषेवोदाहरणचन्द्रिका समयोजि। यया च निबिडतमतमःस्तोममार्जनपुरःसरं सरलस्वभावानांनि सर्गमधुराणि मानसकैरवाणि निरन्तरं प्रसाद्यन्ते। तत्र प्रश्नश्लोकाः प्रायेण ज्ञानराजदैवज्ञकृत---सिद्धान्तसुन्दराध्यायभूतबीजगणितादेव संगृहीताः, केचन ग्रन्थान्तरादपि।

अथ प्रसङ्गाज्ज्ञानराजदैवज्ञस्य पूर्वपुरुषपरिज्ञानार्थं तत्प्रणीतबीजगणितोपसंहारश्लोकाः प्रदर्श्यन्ते--

'श्रीगोदोत्तरतीरपार्थिवपुरे पूर्णाख्यतीर्थे परे
श्रीमद्देवगिरीशरामनृपतेर्मान्यो वदान्यो विदाम्।
विद्वान्राम इतीह तस्य तनयः संप्राप्तविद्योदयो
विष्णुर्नाम बभूव शास्त्रनिपुणः श्रीनीलकण्ठस्ततः॥
तस्माद्विष्णुरभूत्प्रभूतविभवो विद्यानवद्योदयः
सूनुस्तस्य च नीलकण्ठ इव यः श्रीनीलकण्ठोऽपरः।
तत्पुत्रोऽपि तथागुणैरगणितैः ख्यातो महीमण्डले
स्वाचारप्रतिपालनैकनिरतः श्रीनागनाथाभिधः॥
भारद्वाजकुलावतंसविलसद्विद्यानवद्यैर्गुणै-
र्युक्तोऽभूद्विबुधो बुधोपम इति श्रीमन्नृसिंहाभिधः।
तस्मात्सर्वकलाकलापकुशलः श्रीनागनाथोऽभवद्-
गोदातीरकरीन्द्रचारुवदनध्यानानुरक्तः सदा॥
सूनुस्तस्य गजाननस्य कृपया श्रीज्ञानराजःसुधी

विस्तीर्णाद्गणितार्णवाद्बुद्धरत्सिद्धान्तसत्सुन्दरम् ।
रत्नंभूषणहेतवेऽतिगुणवच्छ्रीमद्गुणग्राहिणां
विद्यारत्नपरीक्षकेषुवसतिर्भूयात्सदासादरात् ॥ इति ।

अथेदानींवने‌ऽनेहसि प्रायो लोकास्तत्तद्विषयविशेष पर्यालोचनायै यूरोपिन्मातृभाषामध्येतुमीहन्ते तत्रासज्य भजन्ते चाभिमतार्थसिद्धिम् । ये केचन सांप्रतिकपठनपरिपाटीपर्यटनेन यापितवयस्त्वात्कारणान्तराद्वा प्रचलितविद्यामवगन्तुं न शक्नुवन्ति, साभिलाषमभिलषन्ति च तत्रात्यां विषयपरिज्ञानचातुरीम्, तेषां मनोरञ्जनायात्र कतिचन ज्योतिःशास्त्रोपयोगिनः शब्दाः प्रदर्श्यन्ते—

---

## ( सामान्यतो ज्योतिःशास्त्रोपयोगिनः शब्दाः )

| | | |
|---|---|---|
| Sun | ( सन् ) | सूर्य |
| Moon | ( मून ) | चन्द्र |
| Mars | ( मार्स ) | मङ्गल |
| Mercury | ( मर्करी ) | बुध |
| Jupiter | ( जुपिटर ) | बृहस्पति |
| Venus | ( वीनस ) | शुक्र |
| Saturn | ( सटर्न ) | शनि |
| Aries | ( एरीज़ ) | मेष |
| Taurus | ( टारस ) | वृष |
| Gemini | ( जेमीनाई ) | मिथुन |
| Cancer | ( केन्सर ) | कर्क |
| Leo | ( लिओ ) | सिंह |
| Virgo | ( विर्गो ) | कन्या |
| Libra | ( लईब्रा ) | तुला |
| Scorpio | ( स्कोर्पिओ ) | वृश्चिक |
| Sagitarius | ( सग्गिटेरिअस ) | धन |
| Capricornus | ( केपरिकार्नस ) | मकर |
| Aquarius | ( यक्वारिअस ) | कुम्भ |
| Pisces | ( पिस्सीस ) | मीन |
| Planet | ( प्लेनट् ) | ग्रह |
| Star | ( स्टार ) | तारा |
| Sign | ( साइन ) | राशि |
| Zodiac | ( ज़ोडिराक ) | राशिचक्र |
| East | ( ईस्ट ) | पूर्व |
| South east | ( सौथईस्ट ) | अग्नि |
| South | ( सौथ ) | दक्षिण |
| South west | ( सौथवेस्ट ) | नैर्ऋत्य |
| West | ( वेस्ट ) | पश्चिम |
| North west | ( नार्थवेस्ट ) | वायव्य |
| North | ( नार्थ ) | उत्तर |
| North east | ( नार्थईस्ट ) | ईशान |
| Earth | ( अर्थ ) | भूमि |
| Earth quake | ( अर्थक्वेक ) | भूकम्प |
| Island | ( आइलन्ड ) | द्वीप |
| Continent | ( कान्टिनेण्ट ) | महाद्वीप |

| | | |
|---|---|---|
| Day | ( डे ) | दिन |
| Month | ( मंथ | मास |
| Year | ( ईयर् ) | वर्ष |
| Light part of the month | ( लाइटपार्टआफदिमंथ ) | शुक्लपक्ष |
| Dark part of the month | ( डार्क पार्ट आफदि मंथ ) | कृष्णपक्ष |
| Midnight | ( मिडनाइट ) | अर्धरात्र |

## विशेषतो ज्योतिःशास्त्रोपयोगिनः शब्दा अकारादिक्रमेण प्रदर्श्यन्ते

| | | |
|---|---|---|
| Obtuse angle | ( औवस्यूज़ ऐंगल ) | अधिककोण |
| Obtuse angle trilateral | ( औवट्यूसऐंगलट्रिलेटरल | अधिककोण त्रिभुज |
| Proportion | ( प्रोपोर्शन ) | अनुपात |
| Proportional | ( प्रोपोर्शनल ) | अनुपातीय |
| Quadratic equation containing more than one unknown quantity | ( क्वाड्रेटिकइक्वेशन्कन्टेनिं मोर दैन् वन् अन्नोन क्वानटिटी ) | अनेकवर्णमध्यमाहरण |
| Equations containing more than one unknown quantity. | इक्वेशन्सकन्टेनिं मोरदैन् वन्अन्नोन कानटिटी | अनेकवर्णसमीकरण |
| Aliquot part | ( अलिक्वोट पार्ट ) | अपवर्त्तक |
| Multiple | ( मल्टिपिल ) | अपवर्त्त्य |
| Unknown | ( अन्नोन ) | अव्यक्त |
| Unknown quantity | ( अन्नोनकानटिटी ) | अव्यक्तराशि |
| Rhombus | ( रोमवस | अवर्गक्षेत्र |
| Imaginary quantity | ( इमाजिनेरीकानटिटी ) | असंभाव्यराशि |
| Axis | ( ऐक्सिस ) | अक्ष |
| Focus | ( फोकस ) | अक्षकेन्द्र |
| Base | ( वेस | आधार |
| Rectangle | ( रेक्टैंगिल् ) | आयत |
| Adjacent side | ( ऐड्ज्यसेन्टसाइड ) | आसन्नभुज |
| Permutation and Combination | (पर्म्यूटेशनऐन्डकम्बिनेशन) | अङ्कपाश |
| Ellipse | ( ऐलिप्स ) | अण्डाकृति |
| Difference | ( डिफरेन्स ) | अन्तर |
| Subtended angle | ( सब्टेन्डेडऐङ्गिल् ) | अन्तरगतकोण |
| Degree | ( डिग्री ) | अंश |

| | | |
|---|---|---|
| | ( वर्सडसाइन ) | उत्क्रमज्या |
| Proof. | ( प्रूफ़ ) | उपपत्ति |
| Proved. | ( प्रूव्ड ) | उपपन्न |
| Circumscribed. | ( सर्कम्सक्राइब्ड ) | उपरिगत |
| Circumscribed circle. | ( सर्कम्सक्राइब्डसर्किल ) | उपरिगतवृत्त |
| Common. | ( कामन ) | उभयनिष्ठ |
| Common angle. | ( कामनऐङ्गिल् ) | उभयनिष्ठ कोण |
| Common plane. | ( कामनप्लेन ) | उभयनिष्ठतल |
| Common side. | ( कामनसाइड ) | उभयनिष्ठभुज |
| Altitude. | ( आल्टिच्यूड ) | औन्नत्य |
| Rectilinear figure. | ( रेक्टिलिनिअरफिगर) | ऋजुभुजक्षेत्र |
| Minus. | ( माइनस ) | ऋण |
| Adfected quadratic. | ( ऐडफेक्टेड्क्काड्रेटिक ) | एकवर्णमध्यमाहरण |
| Pure quadratic | ( प्योरकाड्रेटिक ) | एकवर्णवर्गसमीकरण |
| Equations containing only one quantity. | (इक्वेशन्सकनटेनिंओन्लीवन् नकानटिटी ) | एकवर्णसमीकरण। |
| Alternate. | ( आलटरनेट् ) | एकान्तर |
| Alternate angle. | ( आलटरनेट्ऐंगल् ) | एकान्तरकोण |
| Alternate angle | ( आलटरन्यट्आर्क ) | एकान्तरचाप |
| Alternate segments of a circle. | (आलटरनेटसेगमेन्टस् आफ्एसर्किल् | एकान्तरचापक्षेत्र। |
| Surds. | ( सर्डस् ) | करणी |
| Radical quantity. | ( रेडिकलकानटिटी ) | करणीगतराशि |
| Diagonal. | ( डाइगोनल ) | कर्ण |
| Minute. | ( मिनिट ) | कला |
| Time | ( टाइम् ) | काल |
| Centre | ( सेन्टर ) | केन्द्र |
| Straight line passing through the centre of a circle | ( स्ट्रेटलाइनपासिंथ्रूदि सेन्टरआफएसर्किल ) | केन्द्रगरेखा |
| Complement. | ( कम्प्लीमेन्ट ) | कोटि |
| Complement of an angle | ( कम्प्लीमेन्टआफऐङ्गिल ) | कोटिकोण |
| Complement of an arc | (कम्प्लीमेन्टआफऐन्आर्क) | कोटिचाप |
| Cosine | ( कोसाइन ) | कोटिज्या |
| Cosecant | ( कोसिकान्ट ) | कोटिच्छेदनरेखा |
| Cotangent | ( कोटैन्ज्यन्ट ) | कोटिस्पर्शरेखा |
| Coversed sine | ( कोवर्सडसाइन ) | कोट्युत्क्रमज्या |

| | | |
|---|---|---|
| Angle | ( एंगल ) | कोण |
| Angular point | ( एंग्यूलरप्वाइन्ट ) | कोणविन्दु |
| Segment | ( सेगमेन्ट ) | खण्ड |
| Multiplier | ( मल्टीप्लायर ) | गुणक |
| Product | ( प्राडक्ट ) | गुणनफल |
| Multiplied by | ( मल्टीप्लाइडबाई ) | गुणित |
| Common ratio | ( कामनरेशिओ ) | गुणोत्तरचय |
| Geometrical Progression | ( ज्योमेट्रिकलप्रोग्रेशन ) | गुणोत्तरश्रेढ़ी |
| Multiplicand | ( मल्टीप्लिकचन्ड ) | गुण्य |
| Sphere | ( स्फिअर ) | गोल |
| Segment of a sphere | ( सेगमेन्टआफएस्फिअर) | गोलखण्ड |
| Spherical angle | ( स्फेरिकेलएङ्गिल ) | गोलकोण |
| Spherical triangle | ( स्फेरिकलट्राइसङ्गिल ) | गोलीयत्रिभुज |
| Cube | ( क्यूब ) | घन |
| Cube root | ( क्यूबरूट ) | घनमूल |
| Involution | ( इनवोल्यूशन ) | घातक्रिया |
| Coefficient of power | ( कोयफिरएन्टआफ्पावर ) | घातमापक |
| Compound interest | ( कम्पौण्डइन्ट्रेस्ट ) | चक्रवृद्धि |
| Fourth power | ( फोर्थपावर ) | चतुर्घात |
| Quadrilateral | ( क्वाड्रिलेटेरल ) | चतुर्भुज |
| Cube ins cribed in a quadrilateral | ( क्यूबइन्सक्राइब् डइनएकाड्रिलेटेरल ) | चतुर्भुजान्तर्वृत्त |
| Common difference | ( कामनडिफरेन्स ) | चय |
| Arc | ( आर्क ) | चाप |
| Segment of circle | ( स्यगमेटआफसार्किल ) | चापक्षेत्र |
| Angle in an arc | ( एंगल्इन्एआर्क ) | चापान्तर्गत |
| Angle described about an arc | ( एंगिलडिस्क्राइब्डअबौट्रेन्आर्क ) | चापोपरिस्थकोण |
| Secant | ( सिकान्ट ) | छेदनरेखा |
| Sine | ( साइन् ) | ज्या |
| Equal | ( ईक्वल् ) | तुल्य |
| Equangular rectilinear figure | ( इक्वांग्यूलररेक्टिलिनिअरफिगर ) | तुल्यकोणऋजुभुज क्षेत्र। |
| Equangular quadrilateral | ( इक्वांग्यूलरकाड्रिलेटेरल ) | तुल्यकोण चतुर्भुज |
| Equangular trilateral | ( इक्वांग्यूलरट्रिलेटेरल ) | तुल्यकोण त्रिभुज |
| Equangular triangle | ( इक्वांग्यूलरट्राइएङ्गल् | तुल्यकोण त्र्यस्र |

| | | |
|---|---|---|
| Triangle | ( ट्राइएङ्गिल ) | त्रिकोण |
| Trigonometry | ( ट्रिग्नामेट्री ) | त्रिकोणमिति |
| Radius | ( रेडिअस ) | त्रिज्या |
| Trilateral | ( ट्रिलेटरल ) | त्रिभुज |
| Circle inscribed in a triangle | ( सर्किल्इन्सक्राइव्डइन् ए ट्राइएङ्गिल ) | त्रिभुजान्तर्गतवृत्त |
| Circle described about a triangle | ( सर्कलड्यसक्राइब्डअबौट् ए ट्राइएङ्गिल ) | त्रिभुजोपरिस्थवृत्त |
| Rule of three | ( रूलआफ् थ्री ) | त्रैराशिक |
| Decagon | ( डेकागोन ) | दशभुज |
| Decimal | ( डेसिमेल ) | दशमलव |
| Decimal fraction | ( डेसिमेलफ्रैक्शन ) | दशमलवभिन्न |
| Superfices | ( सुपर फिशीज़ ) | धरातल |
| Pole | ( पोल ) | ध्रुव |
| Acute angle | ( अक्यूट ऐंगल ) | न्यूनकोण |
| Acute angled trilateral | ( अक्यूटऐंगिल्ड ट्रिलेटरल) | न्यूनकोणत्रिभुज |
| Acute angled triangle | ( अक्यूटऐंगल्ड ट्राइएङ्गिल) | न्यूनकोणत्र्यस्र |
| Circumference | ( सरकम्फरेन्स ) | परिधि |
| Angle at circumference | ( ऐंगलएट् सरकम्फरेन्स ) | परिधिकोण |
| Transposition | ( ट्रैन्सपोज़ीशन ) | पक्षान्तरानयन |
| Solid | ( सालिड् ) | पिण्ड |
| Solid angle | ( सालिड् ऐंगल ) | पिण्डकोण |
| Chord | ( चार्ड ) | पूर्णज्या |
| Whole number | ( होलनम्बर ) | पूर्णाङ्क |
| Fifth power | ( फिफ्थपावर ) | पंचघात |
| Pentagon | ( पेन्टागोन ) | पंचभुज |
| Double rule of three | ( डबलरूल आफ्थ्री ) | पंचराशिक |
| Hypothesis | ( हाइपोथेसिस ) | प्रतिज्ञा |
| Polygon | ( पालीगोन ) | वहुभुज |
| Point | ( प्वाइन्ट ) | विन्दु |
| Algebra | ( अलजेवरा ) | वीजगणित |
| Quotient | ( कोशेन्ट ) | भजनफल |
| Division | ( डिवोज़न) | भाग |
| Simple fraction | ( सिम्पिल फ्रैकशन् ) | भागजाति |
| Compound fraction | ( कम्पौन्ड फ्रैकशन ) | भागप्रभाग |
| Mixed fraction | ( मिक्सड फ्रैकशन ) | भागानुबन्ध |

| | | |
|---|---|---|
| Divisor | ( डिवाइज़र ) | भाजक |
| Dividend | ( डिवीडेन्ड ) | भाज्य |
| Barter | ( बारटर ) | भाण्डप्रतिभाण्ड |
| Fraction | ( फ्रैक्शन ) | भिन्न |
| Side | ( साइड ) | भुज |
| Locus | ( लोकस ) | भ्रमण |
| Middle | ( मिडिल ) | मध्य |
| Middle point | ( मिडिलपोइन्ट ) | मध्यबिन्दु |
| Quadratic equation | ( काड्रेटिकइक्वेशन ) | मध्यमाहरण |
| Greatest common measure | ( ग्रेटेस्टकामनमेज़र ) | महत्तमापवर्तक |
| Amount | ( अमौन्ट ) | मिश्रधन |
| Evolution | ( इवोल्यूशन ) | मूलक्रिया |
| Principal | ( प्रिन्सिपाल ) | मूलधन |
| Arithmetical progression | ( अरिथमेटिकेलप्रोग्रेशन ) | योगान्तरश्रेढी |
| Least common multiple | ( लीस्टकामनमल्टिपिल ) | लघुतमापवर्त्य |
| Perpendicular | ( परप्यन्डिक्यूलर ) | लम्ब |
| Curve | ( कर्व ) | वक्र |
| Square | ( स्केर ) | वर्ग |
| Square root | ( स्केररूट् ) | वर्गमूल |
| Quadratic equation | ( काड्रेटिकइक्वेशन ) | वर्गसमीकरण |
| Second | ( सेकोंड | विकला |
| Part | (पार्ट) | विभाग |
| Reverse process | ( रिवर्सप्रासेस ) | विलोमगणित |
| Unequal angled triangle | ( अनईकलऐंगिल्डट्राइएङ्गिल) | विषमकोण त्रिभुज |
| Trapezium | ( ट्रेपिज़िअम ) | विषमचतुर्भुज |
| Scalen trilateral | ( स्केलनट्रिलेटेरल ) | विषमत्रिभुज |
| Circle | ( सर्केल ) | वृत्त |
| Sector of a circle | ( सेक्टरआफ़एसर्किल ) | वृत्तखण्ड |
| A straight line which cuts a circle | एस्ट्रेटलाइन ह्विचकट्सए सर्केल | वृत्तखण्डनीरेखा |
| Semicircle | ( सेमिसर्किल) | वृत्तार्ध |
| Known | ( नोन ) | व्यक्त |
| Known quantity | ( नोनक्वानटिटी ) | व्यक्तराशि |
| Subtraction | ( सबट्रैक्शन ) | व्यवकलन |
| Balance | ( बैलेन्स ) | व्यवकलनफल |
| Diameter | ( डाएमेटर ) | व्यास |

| | | |
|---|---|---|
| Semidiameter | ( सेमिडाइमेटर ) | व्यासार्ध |
| Zero | ( जीरो ) | शून्य |
| Remainder | ( रिमेन्डर ) | शेष |
| Cone | ( कोन ) | शङ्कु |
| Conic section | ( कोनिकसेक्शन ) | शंकुच्छेदक |
| Similar | ( सिमिलर ) | सजातीय |
| Similar rectilinears | ( सिमिलररेकटिलिनिअर्स ) | सजातीय ऋजुभुज |
| Similar quadrilaterals | ( सिमिलरकाड्रिलेटेरल्स ) | सजातीयचतुर्भुज |
| Similar arcs | ( सिमिलरआर्क्स ) | सजातीयचाप |
| Similar trilaterals | ( सिमिलरट्रिलेटेरल्स ) | सजातीयत्रिभुज |
| Similar figures | ( सिमिलरफिगर्स ) | सजातीयक्षेत्र |
| Opposite angle | ( अपोजिटऐङ्गल ) | संमुखकोण |
| Opposite side | ( अपोजिटसाइट ) | संमुखभुज |
| Seventh power | ( स्यव्यन्थपावर ) | सप्तघात |
| Heptagon | ( ह्यपटागोन ) | सप्तभुज |
| Right angled trilateral | ( राइटऐङ्गल्डट्रिलेटेरल ) | समकोणत्रिभुज |
| Right angled triangle | ( राइटऐङ्गल्डट्राइएङ्गिल ) | समकोणत्र्यस्र |
| Equilateral trilateral | ( इक्वीलेटरलट्रिलेटेरल ) | समत्रिभुज |
| Isosceles trilateral | ( ऐसासिलिसट्रिलेटेरल ) | समद्विबाहुकत्रिभुज |
| Equilateral | ( इक्वीलेटेरल ) | समभुज |
| Right cone | ( राइटकोन ) | समशङ्कु |
| Parallel | ( पारेललेल ) | समानान्तर |
| Equation | ( इक्वेशन ) | समीकरण |
| Rectilinear angle | ( रेकटिलिनिअरऐङ्गिल ) | सरलकोण |
| Straight line | ( स्ट्रेटलाइन ) | सरलरेखा |
| Subtrahend | ( सबट्राहेन्ड ) | संशोध्यमान |
| Pyramid | ( पीरामिड ) | सूची |
| Denominator | ( डिनामीनेटर ) | हर |
| Figure | ( फिगर ) | क्षेत्र |
| Area | ( एरिआ ) | क्षेत्रफल |

एवमभिव्यक्तोच्चारणप्रक्रिया लघ्वीयं ज्योतिःशास्त्र शब्दानुक्रमणिका सांप्रतिकच्छात्रजनमनोरंजनाय विहितेति विदांकुर्वन्तु सहृदयधुरीणाः।

अथ यथामति पदविभागादिनूतनसंस्कारपुरस्सरं सव्याकृति बीजगणित पुस्तकं स्वहस्तेन विलिख्य पूर्वोक्तमहाशयाय समर्पितम्, तेनाप्युत्साहभाजा लक्ष्मणपुरे स्वयन्त्रालये मुद्रायितं च।

इत्युक्तविधिना विविच्य सञ्जीकृतं टीकाद्वयोपेतमदो वीजगणितं समालोच्य प्रसीदन्तु महाशयाः, सीसकाक्षरयोजकादिदोषेण मदीयमतिदोषेण वा सुलभानि स्खलितानि संशोधयन्तु विवेकशालिन इति सविनयं प्रार्थयते

२५। २। १८९२।
जयपुर·—(राजपुताना·)

विदुषामनुचरो
दुर्गाप्रसादद्विवेदः।

न्यासः। रू ३ रू २̇ अन्तरे जातम् रू ५।

न्यासः। रू ३̇ रू २ अन्तरे जातम् रू ५̇।

इति धनर्णव्यवकलनम्।

---

उदाहरण—

तीन धन में दो धन, वा तीन ऋण में दो ऋण, वा तीन धन में दो ऋण अथवा तीन ऋण में दो धन घटाकर शेष जल्दी बतलाओ॥

(१) न्यास। रू ३ रू २ इनका अन्तर रू १ हुआ।
(२) न्यास। रू ३̇ रू २̇ इनका अन्तर रू १̇ हुआ।
(३) न्यास। रू ३ रू २̇ इनका अन्तर रू ५ हुआ।
(४) न्यास। रू ३̇ रू २ इनका अन्तर रू ५̇ हुआ।

घटाने का प्रकार समाप्त हुआ

---

## गुणने करणसूत्रं वृत्तार्धम्--

स्वयोरस्वयोः स्वं वधः स्वर्णघाते
क्षयो————————————॥

अथ गुणनं भुजंगप्रयातपूर्वार्धखण्डेनाह—स्वयोरिति। स्वयोर्धनयोः अस्वयोर्ऋणयोर्वा वधो गुणनं एकस्यापरतुल्यावृत्तिर्धनं भवति। स्वर्णघाते तु क्षयः स्यात्। एतदुक्तं भवति—यदि गुण्यो गुणकश्चेति द्वावपि धनमृणं वा स्यातां तर्हि तदुत्पन्नं फलं धनं स्यात्। अत्र गुणनफलस्य धनर्णत्वमात्रं प्रतिपादितम्। अङ्कतस्तु व्यक्तोक्ताः सर्वेऽपि गुणनप्रकारा द्रष्टव्याः॥

गुणनका प्रकार—

गुणन के दो राशि में एक को गुण्य और दूसरे को गुणक कहते हैं। वे दो राशि धन वा ऋण हों तो उनका घात धन होगा और उनमें एक धन दूसरा ऋण होवे तो उनका घात ऋण होगा॥

उपपत्ति—

गुण्य की गुणक समान जो आवृत्ति उसे गुणनफल कहते हैं (यह बात लीलावती के 'गुण्यान्त्यमङ्कं—' इत्यादि गुणनसूत्रों के व्याख्यान में भलीभांति स्पष्ट है) गुण्य और गुणक धन हों तो गुणनफल धन होगा।

उनमें एक धन दूसरा ऋण होवे तो गुणनफल ऋण होगा क्योंकि गुणक तुल्य स्थानगत ऋण गुण्योंका योग ऋण होताहै॥ अथवा, पूर्वोक्त रीति से समान धन और ऋण जो दो राशिहों उनका योग शून्य होता है। जैसे 'रू २ रू २̇' इनका योग रू० हुआ। इनको किसी एक तुल्य अङ्क से गुण दो तो भी योग शून्यही होगा इसलिये 'रू २ रू २̇' इनको धन तीनसे गुण दिया तो पहिले स्थान में धन धनका घात रू ६ धन हुआ। दूसरे स्थान में धन और ऋण का घात यदि ऋण न अङ्गीकार करैं तो 'रू ६ रू ६' इनका योग क्योंकर शून्यात्मक होगा इसकारण धन और ऋणका घात ऋणही होगा। इसीप्रकार 'रू २ रू २̇' इन दो राशिको ऋण तीन से गुण दिया तो पहिले स्थान में धन और ऋणका घात ऋण रू ६̇ हुआ दूसरे स्थान में यदि ऋण ऋणका घात धन न अङ्गीकार करैं तो 'रू ६̇ रू ६̇' इनका योग क्योंकर शून्य होगा इस्से स्पष्ट प्रतीत होताहै कि ऋणात्मक राशियों का घात धनही होता है इसलेख के पर्यालोचन से 'स्वयोरस्वयोः स्वं वधः—' इस गुणनसूत्रकी उपपत्ति अतिस्पष्ट होती है॥

## उदाहरणम्—

धनं धनेनर्णमृणेन निघ्नं
द्वयं त्रयेण स्वमृणेन किं स्यात्॥ २॥

न्यासः। रू २ रू ३ धनं धनघ्नं धनं स्यादिति जातम् रू ६
न्यासः। रू २̇ रू ३̇ ऋणमृणघ्नं धनं स्यादिति जातम् रू ६
न्यासः। रू २ रू ३̇ धनमृणगुणमृणं स्यादिति जातम् रू ६̇
न्यासः। रू २̇ रू ३ ऋणं धनगुणमृणं स्यादिति जातम् रू ६̇

इति धनर्णगुणनम्

---

उदाहरण—

धन दो को धन तीन से वा, ऋण दो को ऋण तीन से वा, धन दो को ऋण तीनसे अथवा ऋण दो को धन तीनसे गुणकर गुणनफल अलग अलग बतलाओ॥

(१) न्यास। रू २ रू ३। धनको धन से गुणने से गुणनफल रू ६ धन हुआ।

(२) न्यास। रू २̇ रू ३̇। ऋणको ऋण से गुणनेसे गुणनफल रू ६ धन हुआ।

( ३ ) न्यास । रू २ रू ३̇ । धन को ऋण से गुणने से गुणनफल रू ६̇ ऋण हुआ ।

( ४ ) न्यास । रू २̇ रू ३ । ऋण को धन से गुणने से गुणनफल रू ६̇ ऋण हुआ ।

धन और ऋण राशि का गुणन समाप्त हुआ

---

—भागहारेऽपि चैवं निरुक्तम् ॥

उदाहरणम्—

रूपाष्टकं रूपचतुष्टयेन
धनं धनेनर्णमृणेन भक्तम् ।
ऋणं धनेन स्वमृणेन किं स्या-
द्रुतं वदेदं यदि बोबुधीषि ॥ ३ ॥

न्यासः। रू ८ रू ४ । धनं धनहृतं धनं स्यादिति जातम् रू २ ।
न्यासः। रू ८̇ रू ४̇ । ऋणमृणहृतं धनं स्यादिति जातम् रू २ ।
न्यासः। रू ८̇ रू ४ । ऋणं धनहृतमृणं स्यादिति जातम् रू २̇ ।
न्यासः। रू ८ रू ४̇ । धनमृणहृतमृणं स्यादिति जातम् रू २̇ ।

इति धनर्णभागहारः ।

---

अथ भागहारं भुजंगप्रयातपूर्वार्धशेषशकलेनाह—भागहार इति। भागहारेऽपि गुणनवदेव निरुक्तमित्यर्थः । अस्यायमभिप्रायः—भाज्यभाजकयोरुभयोरपि धनत्वे ऋणत्वे वा लब्धिर्धनमेव स्यात् । यदा त्वेकतरस्य धनत्वमितरस्य ऋणत्वं तदा लब्धिर्ऋणमेव भवति ॥

भागहार का प्रकार—

भाज्य और भाजक धन या ऋण होवे तो लब्धि धन आती है यदि एक धन हो और दूसरा ऋण हो तो लब्धि ऋण आवेगी ॥

उपपत्ति—

भागहार में गुणन के समान संपूर्ण क्रिया करने को कही है। जैसा—गुणन में धन धन का या ऋण ऋण का घात धन होता है वैसाही यहां पर धन राशि में धन राशि का भाग लेने से लब्धि धन मिलैगी क्योंकि धन राशियों का घात धनही होताहै। इसी प्रकार भाज्य और भाजक में कोई एक धन होवे और दूसरा ऋण तो भी लब्धि ऋण आवेगी क्योंकि धन और ऋण का घात ऋण होता है। ऋण भाज्य में ऋण भाजकका भाग लेने से लब्धि धन आती है क्योंकि हर और लब्धि का घात सर्वत्र भाज्य राशि के समान होता है। इससे 'भागहारे—'यह उपपन्न हुआ॥

उदाहरण—

धन आठ में धन चार का, वा ऋण आठ में ऋण चार का, वा ऋण आठ में धन चार का, अथवा धन आठ में ऋण चार का भाग लेनेसे क्या लब्धि मिलैगी॥

(१) न्यास। रू ८ रू ४। धन ८ में धन ४ का भाग लेने से धन रू २ लब्धि मिली॥

(२) न्यास। रू ८̇ रू ४̇। ऋण ८̇ में ऋण ४̇ का भाग लेने से धन रू २ लब्धि मिली॥

(३) न्यास। रू ८̇ रू ४। ऋण ८̇ में धन ४ का भाग लेने से ऋण रू २̇ लब्धि मिली॥

(४) न्यास। रू ८ रू ४̇। धन ८ में ऋण ४̇ का भाग लेने से ऋण रू २̇ लब्धि मिली॥

धन और ऋण राशि के भागहार का प्रकार समाप्त हुआ

---

वर्गादौ करणसूत्रं वृत्तार्धम्—

कृतिः स्वर्णयोः स्वं स्वमूले धनर्णे
न मूलं क्षयस्यास्ति तस्याकृतित्वात्॥ ४॥

उदाहरणम्—

धनस्य रूपत्रितयस्य वर्गं
क्षयस्य च ब्रूहि सखे ममाशु॥

न्यासः। रू ३ रू ३̇। जातौ वर्गौ रू ९ रू ९।

उदाहरणम्—

धनात्मकानामधनात्मकानां
मूलं नवानां च पृथग्वदाशु ॥ ४ ॥

न्यासः । रू ९ । मूलम् ३ वा ३̇ ।

न्यासः । रू ९̇ । एषामवर्गत्वान्मूलं नास्ति ।

इति धनर्णवर्गमूले ।

इति धनर्णषड्विधम्

---

अथ वर्गं तन्मूलं च भुजंगप्रयातोत्तरार्धेनाह—कृतिरिति । स्वस्य धनस्य ऋणस्य च वा वर्गः स्वं स्यात् । अथ मूलमाह—स्वमूले धनर्णे इति । स्वस्य धनस्य मूले धनर्णे भवतः । धनस्यैव वर्गस्य मूलमृणमपि भवतीति भावः । अथात्र विशेषमाह—न मूलं क्षयस्यास्तीति । अत्र हेतुं प्रदर्शयति—तस्याकृतित्वादिति । वर्गस्य मूलं लभ्यते । ऋणाङ्कस्तु न वर्गः कथमतस्तस्य मूलं स्यात् ॥ ४ ॥

इत्याचार्यश्रीसरयूप्रसादसुत—दुर्गाप्रसादोन्नीते लीलावतीहृदयग्राहिणि बीजविलासिनि धनर्णषड्विधं विवरणं समाप्तम् ॥

---

वर्ग और वर्गमूलका प्रकार—

धन अथवा ऋण राशिका वर्ग धन होताहै और उस धनात्मक राशिका वर्गमूल धन वा ऋण होताहै । ऋणराशि का मूल नहीं होता क्योंकि वह ( ऋणात्मक राशि ) वर्ग नहीं हैं ॥ ४ ॥

उपपत्ति—

किसी एक राशि के समान दो घात को वर्ग कहते हैं और धनात्मक राशि को धनात्मक राशि से गुण दो, या ऋणात्मक राशि को ऋणात्मक राशि से गुण दो तो उन का घात धन होताहै यहबात अतिप्रसिद्ध है, इसलिये वर्गात्मक राशि सदा धन और उसका मूल धन वा ऋण होताहै और ऋणा-

त्मक राशि वर्ग नहीं है क्योंकि वर्णघात के ऋण होने से 'समाद्विघातः कृतिः' इसलक्षणका विषय नहीं होसक्ता इस्से 'कृत्तिः स्वर्णयोः—' उपपन्नहुआ ॥ ४ ॥

उदाहरण—

धन तीन और ऋण तीन इनका वर्ग कहो ॥

( १ ) न्यास । रू ३ । इस का वर्ग रू ९ हुआ ।

( २ ) न्यास । रू ३̇ । इस का वर्ग रू ९ हुआ ।

उदाहरण—

धन नौ अथवा ऋण नौ का वर्गमूल कहो ॥

( १ ) न्यास रू ९ इस मूल रू ३ धन, या, रू ३̇ ऋण हुआ ।

( २ ) न्यास । रू ९̇ यह वर्गात्मक राशि नहीं है इसकारण इसका मूल नहीं मिलसक्ता है ॥

धन और ऋण राशि के वर्ग और वर्गमूल का प्रकार समाप्त हुआ ॥

उपपत्ति करके सहित धनर्णषाड्विध अर्थात् संकलन, व्यवकलन, गुणन, भजन, वर्ग और वर्गमूल समाप्त हुआ ॥

दुर्गाप्रसादरचिते भाषाभाष्ये मिताक्षरे ।
वासनाभङ्गिसुभगं संपूर्णं स्वर्णषड्विधम् ॥

---

खसंकलनव्यवकलने करणसूत्रं वृत्तार्धम्–

खयोगे वियोगे धनर्णं तथैव
च्युतं शून्यतस्तद्विपर्यासमेति ॥

अथ शून्यस्य संकलनव्यवकलने भुजंगप्रयातपूर्वार्धेनाह—खयोग इति । रूपस्य यावत्तावदादिवर्णस्य करण्या वा शून्येन सह योगे वियोगे वा कर्त्तव्ये रूपादिकं धनमृणं तथैव भवेत् । योगवियोगकृतो न कश्चिद्विशेष इत्यर्थः । अत्र खयोगो द्विविधः । खेन योगो रूपादेः खयोग इत्येकः । खस्य योगो रूपादिना खयोग इति द्वितीयः । एवं वियोगोपि द्विविधः । खेन वियोग इत्येकः । खाद्वियोग इति द्वितीयः । तत्र द्विविधेऽपि खयोगे पूर्वस्मिन्खवियोगे च रूपादिकं धनमृणं वा यथास्थितमेव । खाद्वियोगे विशेषमाह—च्युतमिति । धनमृणं वा रूपादिकं शून्यतः शोधितं सद्विपर्यासं वैपरीत्यमेति प्राप्नोति । धनं शून्यतश्च्युतमृणमृणं चेद्धनं भवतीत्यर्थः ॥

शून्य के जोड़ने और घटाने का प्रकार—

शून्य को किसी राशि में जोड़ दो, वा शून्य में किसी राशि को जोड़ दो और शून्य को किसी राशि में घटा दो तो भी धन या ऋण का विपर्यास अर्थात् एर फेर नहीं होता । जो शून्य में किसी राशि को घटा दो तो वह धन होवे तो ऋण और ऋण होवे तो धन होजाता है ॥

उपपत्ति—

जो इकट्ठे करने की संख्या केवल दो हो तो उनमें से जिस संख्या में दूसरी संख्या मिलानी होगी उस पहिली संख्या को योज्य और दूसरी को योजक कहते हैं । योज्य और योजक के बीच में योजक का जितना ह्रास होगा उतनाहीं योगज फल अर्थात् जोड़ का भी ह्रास होगा । इसीप्रकार योजक के तुल्य योजक का ह्रास होने से योगज फल में भी योजकतुल्य ह्रास होगा । अब इस दशा में योज्य के समान योगज फल सिद्ध होगा और जब योज्य योजक में योज्य के समान ह्रास होगा तब योजक के तुल्य योगज फल होगा इस लिये कहा है कि शून्य को किसी राशि में जोड़ दो अथवा शून्य में किसी राशि को जोड़ दो तो भी वह राशि ज्यों का त्यों रहता है ॥ घटाने की दो संख्याओं में बड़ी संख्या को वियोज्य और छोटी को वियोजक कहते

है। वियोज्य का वियोजक के तुल्य ह्रास होने से अन्तर सिद्ध होता है और वियोजक का जितना ह्रास होगा उतनाहीं अन्तर की वृद्धि होगी अब जो वियोजक के तुल्य वियोजक का ह्रास होवे तो अन्तर में वियोज्य तुल्य वृद्धि होगी अर्थात् वियोज्य संख्या के तुल्य अन्तर सिद्ध होगा इसलिये कहा है कि शून्य को किसी राशि में घटा देने से उसका मान नहीं बिगड़ता। वियोज्य का जैसा जैसा ह्रास होता जावैगा वैसाही व्यवकलनफल अर्थात् अन्तर का भी ह्रास होगा यह बात अतिप्रसिद्ध है। जैसा वियोज्य ५ और वियोजक ३ है तो अन्तर २ हुआ, अब यहां ४ वियोज्य रक्खा तो अन्तर १ हुआ, ३ वियोज्य रक्खा तो अन्तर ० हुआ, २ वियोज्य रक्खा तो अन्तर १̇ हुआ, १ वियोज्य रक्खा तो अन्तर २̇ हुआ, और ० शून्य वियोज्य रक्खा तो अन्तर ३̇ हुआ इस लिये कहा है कि शून्य में किसी राशि को घटादेने से उसके धन ऋण चिह्न बदल जाते हैं अर्थात् वह धनहो तो ऋण और ऋण हो तो धन होजाता है इससे 'खयोगे वियोगे धनर्णं तथैव—' यह सूत्र उपपन्न हुआ॥

उदाहरणम्—

रूपत्रयं स्वं क्षयगं च खं च
किं स्यात्खयुक्तं वद खच्युतं च॥

न्यासः। रू ३ रू ३̇ रू ०। एतानि खयुतान्यविकृतान्येव।
न्यासः। रू ३ रू ३̇ रू ०। एतानि खाच्च्युतानि रू ३̇ रू ३ रू ०।
इति खसंकलनव्यवकलने।

---

रूपत्रयमिति। धनं रूपत्रयम् ऋणं रूपत्रयं खं च एतत्त्रयमपि पृथक् पृथक् खयुक्तं किं स्यात्। अत्र खेन युक्तं खयुक्तम्। खे युक्तं खयुक्तम्। इत्युदाहरणद्वयमपि द्रष्टव्यम्। एवं खच्युतमित्यत्रापि तृतीयापञ्चमीतत्पुरुषाभ्यामुदाहरणद्वयं द्रष्टव्यम्॥

उदाहरण—
धन तीन, ऋण तीन और शून्य, इनमें शून्य को जोड़ देने से अथवा शून्य में इन को जोड़ देने से और उन्हीं में शून्य को घटाने से वा शून्य में उन का घटाने से क्या फल होगा सो कहो॥

---

१ बहुत्र 'खाच्च्युतम्' इति पाठो दृश्यते स प्रामादिक एव।

न्यास ।

( १ ) योज्य । रू३ रू३̇ रू०
योजक । रू० रू० रू०

योग । रू ३ रू३̇ रू०

न्यास ।

( २ ) योज्य । रू० रू० रू०
योजक । रू३ रू३̇ रू०

योग । रू ३ रू ३̇ रू०

न्यास ।

( ३ ) वियोज्य । रू ३ रू ३̇ रू०
वियोजक । रू० रू० रू०

अन्तर । रू ३ रू ३̇ रू०

न्यास ।

( ४ ) वियोज्य । रू० रू० रू०
वियोजक । रू ३ रू ३̇ रू०

अन्तर । रू ३̇ रू३ रू०

यहां चार उदाहरण दिये हैं पर पहिले तीन उदाहरणों में योग और अन्तर करने से कुछ विकार नहीं हुआ चौथे उदाहरण में ऋण और धन का व्यत्यय हुआ है ॥

शून्य के जोड़ने और घटाने का प्रकार समाप्त हुआ ॥

---

## खगुणनादिषु करणसूत्रं वृत्तार्द्धम्--

वधादौ वियत्खस्य खं खेन घाते
खहारो भवेत्खेन भक्तश्च राशिः ॥ ५ ॥

अथ खगुणनादिकं भुजंगप्रयातोत्तरार्धेनाह—वधादाविति । यथा पूर्वं खयोगवियोगयोर्द्वैविध्यमुक्तं तथा खगुणनभजनयोरपि द्वैविध्यमास्ते । खस्येति खेनेति च । वर्गादिषु तु खस्येत्येक एव प्रकारः संभवति । वर्गादिकरणे द्वितीयसंख्यानपेक्षणात् । तत्र

खस्येति प्रकारेष्वाह—खस्य शून्यस्य वधादौ गुणनभजनवर्गतन्मूलघनतन्मूलेषु कर्तव्येषु गुणनफलादिकं शून्यं स्यात्। खेनेति गुणनप्रकारे फलमाह—खं खेन घात इति। खेन शून्येन घाते कस्यचिदङ्कस्य गुणनफलं खं स्यात्। अत्र 'खगुणश्चिन्त्यः शेषविधौ' इति व्यक्तोक्तो विशेषो द्रष्टव्यः। अन्यथा

'त्रिभज्यकोन्मण्डलशङ्कुघाता-
च्चरज्ययाप्तं खलु यष्टिसंज्ञम्'

इत्यानयने गोलसंधौ यष्ट्यभावापत्तिः स्यात्। तत्र तु गोलजरीत्या लम्बज्यासमाना यष्टिरायातीति विस्तर उपपत्तीन्दुशेखरे द्रष्टव्यः। खेनेति भजनप्रकारे फलमाह—खहारो भवेदिति खेन भक्तो राशिः खहारो भवेत्। खं शून्यं हारश्छेदो यस्य स खहारोऽनन्त इत्यर्थः॥ ५॥

शून्यके गुणन, भजन, वर्ग और वर्गमूल का प्रकार—

जैसा शून्य का योग और अन्तर दो प्रकारका होताहै वैसाही गुणन और भजन भी दो प्रकारके कहे हैं, वर्ग, वर्गमूल घन और घनमूल ये एकही प्रकारके कहेहैं क्योंकि इनके करनेमें दूसरी संख्या की अपेक्षा नहीं पड़ती। गुणनमें शून्यको किसी राशिसे गुण दो अथवा किसी राशिको शून्य से गुण दो तो गुणनफल शून्यही होगा। भागहार में इतना विशेष है कि—शून्यमें किसी राशिका भागलेनेसे फल शून्यही मिलताहै पर शून्यका किसी राशिमें भागलेने से वह राशि खहर अर्थात् उसके नीचे शून्य छेद होताहै॥

उपपत्ति—

अङ्कके अभावमें उस स्थानकी पूर्णता के वास्ते शून्य० यह चिह्नविशेष लिखते हैं। गुणक यह आवर्तक है क्योंकि गुणक तुल्य गुण्यकी आवृत्ति करनेसे गुणनफल होताहै इस कारण गुण्यके अभावसे गुणनफलका भी अभाव सिद्धहुआ। इसी प्रकार भाज्य के ह्रासवश से लब्धिका भी ह्रास होताहै जब कि भाज्य शून्यहै तो लब्धि अवश्यही शून्यहोगी। इस प्रकार जैसा जैसा भाजकका ह्रास होगा वैसाही लब्धि की वृद्धि होगी जब कि भाजक का परम ह्रास होगा उस दशामें लब्धि की परम वृद्धि होगी इसी हेतु लब्धि की अनन्तता कहीहै, शेष वासना स्पष्टहै, इस लेख के पर्यालोचन करने से 'वधादौ वियत्—' इससूत्रकी उपपत्ति स्पष्ट प्रतीत होती है॥ ५॥

उदाहरणम्—

द्विघ्नं त्रिहृत्खं खहृतं त्रयं च

शून्यस्य वर्गं वद मे पदं च ॥ ५ ॥

न्यासः। गुण्यः। रू० गुणकः रू २ गुणिते जातम् रू०।

न्यासः। भाज्यः रू०। भाजकः रू ३ भक्ते जातम् रू०।

न्यासः। भाज्यः रू३। भाजकः रू ० भक्ते जातम् रू

अयमनन्तो[1] राशिः खहर इत्युच्यते।

द्विघ्नमिति। द्वाभ्यां हन्यते गुण्यते तद् द्विघ्नमिति व्युत्पत्त्या शून्ये गुण्ये द्वौ हन्तीति व्युत्पत्त्या शून्ये गुणके च पृथगुदाहरणं द्रष्टव्यम्। इन्द्रवज्राछन्द इदम्॥

उदाहरण—

शून्य में तीन का भाग लेने से, वा तीन में शून्यका भागलेने से क्या फल मिलैगा और शून्यका वर्ग, वर्गमूल क्या होगा सो कहो।

(१) न्यास। गुण्य रू० गुणक रू २ गुणनफल रू० हुआ।
(२) न्यास। गुण्य रू० २ गुणक रू० गुणनफल रू० हुआ।
(३) न्यास। भाज्य रू० भाजक रू ३ भजनफल रू० हुआ।
(४) न्यास। भाज्य रू ३ भाजक रू ० भजनफल रू $\frac{3}{0}$ हुआ।

यह $\frac{3}{0}$ अनन्तराशि खहर कहलाता है॥

अस्मिन्विकारः खहरे न राशा-

वपि प्रविष्टेष्वपि निःसृतेषु।

बहुष्वपि स्याल्लयसृष्टिकाले

ऽनन्तेऽच्युते भूतगणेषु यद्वत्॥ ६॥

न्यासः। रू० अस्यवर्गः रू०। मूलम् रू० एवं खघनादि।

इति खषड्विधम्॥

---

१ बीजावतंसे—
शून्याभ्यासवशात्खतामुपगतो राशिः पुनः खोद्भृतो-
ऽप्याद्यर्शिं पुनरेव तन्मयतया न प्राक्तनीं गच्छति।

अथात्र खहरराशेरविकारतादृष्टान्तप्रसङ्गेन भगवन्तमनन्तं स्तौति--अस्मिन्निति । प्रलयकाले कल्पान्तसमये भगवति अष्टै-श्वर्यसंपन्ने अनन्ते अन्तरहिते अच्युते विष्णौ बहुष्वपि भूतगणे-षु प्रविष्टेषु लीनेषु । अपि वा सृष्टिकाले निःसृतेषु देहादिमत्तया भगवतोऽच्युतात्पृथग्भूतेष्वपि यद्वद्विकारो नास्ति । न हि तेषु प्रविष्टेषु महान् भवति निःसृतेषु वा लघुर्भवति । तथास्मिन् खहरे राशावपि बहुष्वपि राशिषु प्रविष्टेषु निःसृतेषु वा विकारो नास्तीति । उपजातिवृत्तमेतत् ॥ ६ ॥

इत्याचार्यश्रीसरयूप्रसादसुत--दुर्गाप्रसादोन्नीते लीलावती-हृदयग्राहिणि बीजविलासिनि खषड्विधविवरणं समाप्तम् ॥

---

इस खहर राशि में कोई राशि जोड़ दियेजावें अथवा घटादिये जावें तो भी कुछ विकार नहीं होता जैसे प्रलयकाल में परमेश्वर के शरीर में अनेक जीव प्रविष्ट होते हैं और सृष्टि कालमें निकल आते हैं तो भी उस पर-मेश्वर के शरीर में कुछ विकार नहीं होता कि जीवों के प्रविष्ट होने से मोटा और निकलने से दुबला होजावे । यद्यपि इस खहर राशि में भिन्नाङ्क के जोड़-ने आदि से स्वरूप में विकार पड़जाता है तो भी उसकी लब्धिका अनन्तत्व ( अनन्तपना ) नहीं नष्ट होता । जैसे अवतारों के भेद होने से उस परमेश्वर के स्वरूप में तो अन्तर पड़जाता है पर अभीष्टफलदातृत्व में कुछ विकार नहीं होता । ऐसाही खहर राशिको जानना चाहिये ॥ ६ ॥

अब इस खहर राशिके विषय में छात्रजनों की व्युत्पत्तिके लिये कुछ विशेष वर्णन करतेहैं—जैसे $\frac{३}{०}$ इस खहरराशिमें ३ जोड़नाहै तो 'कल्प्यो हरो रूपम-हारराशेः' इस व्यक्तगणित की रीति के अनुसार १ हर कल्पना किया क्योंकि जिस राशिमें ३ को जोड़ना है वह राशि भिन्न है अर्थात् उसके नीचे शून्य का छेद लगा हुआ है । फिर 'अन्योन्यहाराभिहतौ हरांशौ—' इसप्रकार से समच्छेद करके उन दो राशियोंका योग वा अन्तर किया तो कुछ विकार नहीं पड़ा अर्थात् वह योग और अन्तर से उत्पन्नहोनेवाला राशिस्वरूप स-मान रहा न्यास $\frac{३}{०}$ में $\frac{३}{१}$ को जोड़ने के लिये समच्छेद करने से $\frac{३}{०}+\frac{०}{०}$ ऐसा स्वरूपहुआ फिर इनका योग $\frac{३}{०}$ वही अविकृत राशिहुआ ॥ इसीप्रकार अन्तर करनेसे वही राशिआया $\frac{३}{०}$ ॥ यहांपर स्वरूपमें विकार नहीं पड़ा परंतु भि-

---

आत्माभ्यासवशादनन्तममलं चिद्रूपमानन्ददं
प्राप्य त्वं प्रवदं न संसृतिपथं योगा गरीयानिव ॥ १ ॥

घाङ्कके साथ योग या अन्तर करनेसे पूर्वोक्त राशिमें विकार पड़ेगा। जैसे $\frac{३}{०}$ में $\frac{१}{३}$ को जोड़नाहै तो समच्छेद करनेसे $\frac{९}{०}$ $\frac{०}{०}$ ऐसा स्वरूप हुआ इनका योग $\frac{९}{०}$ हुआ। यदि ऐसा कथनकरो कि एक राशिके छेदकरके अथवा किसी अङ्ककरके दूसरे राशिके छेदांश को गुण देने से समान छेद होजानेपर आगेका श्रम व्यर्थ है। जैसे प्रकृतमें $\frac{३}{०}$ खहर राशिके शून्यहरकरके दूसरे राशि $\frac{१}{३}$ के छेद और अंशको गुणदेने से $\frac{९}{०}$ $\frac{०}{०}$ ये समान छेद वाले होगये अब इनके योग अथवा अन्तर करने से कुछभी विकार नहीं है तो खहर, खहर राशिके योग अथवा अन्तर करनेमें अवश्य विकार होगा। जैसे $\frac{३}{०}+\frac{५}{०}$ ये दो खहर राशिहैं इनके तुल्य हर होने से योग $\frac{८}{०}$ हुआ इस अवस्थामें क्योंकर कहसक्ते हैं कि विकार नहीं हुआ पर वास्तव ( असल ) में यहां पर भी फल में विकार नहीं हुआ किन्तु स्वरूपमात्र में। देखो ऐसा नहीं होता कि ३ तीन में ० शून्य का भागलेने से और फल मिलै और ८ आठ में भागलेने से और, किंतु दोनों स्थानमें अनन्तता का व्यभिचार नहीं होता। जैसे ' उन्नतांशजीवा रूप शंकुमें दृग्ज्याभुज पाते हैं तो इष्टद्वादशाङ्गुल आदिशङ्कु में क्या, इस प्रकार त्रैराशिक करके सिद्धान्त में छायासाधन किया है। उदयकाल में उन्नत जीवा का अभाव होता है और दृग्ज्या त्रिज्या १२० के समान होती है। अब दो तीन चार आदि अङ्गुल के शङ्कुओं पर से उक्त त्रैराशिक करके ये खहर छाया सिद्ध होती हैं $\frac{२४०}{०}$ । $\frac{३६०}{०}$ । $\frac{४८०}{०}$ । इनमें फलका वैलक्षण्य नहीं है और उस काल में न्यूनाधिक प्रमाण वाले भी शङ्कुओं से जो छाया सिद्ध की जाती हैं उनकी अनन्तता नहीं व्यभिचारित होती और उदयकाल में ३४३८, १२०, १००, ९० इन त्रिज्याओं परसे उक्त त्रैराशिक के अनुसार द्वादशाङ्गुल शङ्कु की ये छाया आती हैं $\frac{४१२५६}{०}$ । $\frac{१४४०}{०}$ । $\frac{१२००}{०}$ । $\frac{१०८}{०}$ इनमें कुछ भी फल भेद नहीं है और त्रिज्याके भेद होने से छाया का भेद नहीं होता किंतु नाना त्रिज्या परसे त्रैराशिक द्वारा छाया अल्पही आती हैं यह सकल गणकजनों का सिद्धान्त है। इसी विषयपर विश्वरूपापरनामा श्री मुनीश्वरने पाटीसार नामक ग्रन्थ में कहाहै—

ननु योगेन भक्तोऽसौ तद्धरः स्यादतो न सत्।
खभक्त इति पृच्छाया उत्तरं खहरात्मकम् ॥ १ ॥

तस्मात्खभक्तराशेः किं फलं प्रश्नार्थगोचरम्।
घस्योत्तरं खहारोऽयमनन्तफल उच्यते ॥ २ ॥

भाज्याद्धरापचयके न फलस्य वृद्धि-
रस्मात्परापचितखात्महरेण भक्तात्।
लब्धे परोपचय एतदनन्तसंख्या-
मारोहतीति नियते परता न चास्ति ॥ ३ ॥

श्रीभास्कराचार्येण कृतेऽत्र वीजे
खहारराशौ परमेशसाम्यात्।
उक्तं यतोऽङ्केन वियोजितोऽयं
संयोजितश्चाविकृतोऽस्ति नित्यम्॥ ४॥

अस्मिन्विकारः खहरेऽस्ति राशौ
भिन्नाङ्कयोगे त्वथ भिन्नहीने।
योगोऽन्तरं तुल्यहरत्वपूर्वं
कार्यं ततः केचिदिदं वदन्ति॥ ५॥

तन्नैव युक्तं गुणकेन जातो
विकारको नैव युतेर्वियोगात्।
यतः समच्छेदतया वियोग-
योगांगता तद्गुणनस्य सिद्धा॥ ६॥

विकारेऽपि नानन्तलब्धेर्विकारो
यतस्तुल्यलब्धं द्वयोर्नाधिकोनम्।
यतश्चोदयेऽनेकराशित्रयज्या-
वशाच्छून्यहारप्रभेदेऽपि भैक्यम्॥ ७॥

एवं पितृव्याः[1] प्रवदन्ति वीज-
नवाङ्कुरे[2] ते खहराः समानाः।
फलेन सिद्धान्तजवासनाभि-
र्युक्ता यतस्तत्खलु युक्तियुक्तम्॥ ८॥

एवं त्वभिन्नत्रयमौर्विकोत्था
अनेकशङ्कुप्रविकल्पितेन।
तत्रोदयास्ते खहराः प्रभिन्ना-
स्तल्लब्धिसाम्यं गणकैरमान्यम्॥ ९॥

शङ्कुप्रभेदोद्भवभाः प्रभिन्नाः
सिद्धान्तयुक्त्या कथमन्यथा भाः।
तद्भिन्नकालेऽपि समाः कुतो न
त्वन्ते खहारास्तु फलैर्न तुल्याः॥ १०॥

तस्मात्फलोनाधिकशून्यहारे-
ष्वानन्त्यरूपेण फलप्रसाम्यम्।
युक्तं समाभाति सुवासनाढ्यं
संख्यागतं नैव फलं यतोऽत्र॥ ११॥

---

१ सिद्धान्तसुन्दरप्रणेतारः कवितारः श्रीज्ञानराजदैवज्ञाः

२ नवाङ्कुरकाराः कृष्णदैवज्ञाः।

इससे भी अधिक शून्यगणित की चर्चा मेरे बनायेहुए लीलावती के व्याख्यानमें और उपपत्तीन्दुशेखरमें की है सो ग्रन्थगौरववशसे यहां नहीं लिखी॥

( १ ) न्यास। रू० इसका वर्ग रू० हुआ।

( २ ) न्यास। रू० इसका वर्गमूल रू० हुआ।

इसी भांति शून्यराशि के घनादिकों को भी जानो

सोपपत्तिक खपड्विध समाप्त हुआ

दुर्गाप्रसादरचिते भाषाभाष्ये मिताक्षरे।
वासनाभङ्गिसुभगं संपूर्णं शून्यपड्विधम्॥

---

यावत्तावत्कालको नीलकोऽन्यो
वर्णः पीतो लोहितश्चैतदाद्याः।
अव्यक्तानां कल्पिता मानसंज्ञा--
स्तत्संख्यानं कर्तुमाचार्यवर्यैः॥ ७॥

अथाव्यक्तषड्विधत्वं निरूपयति—तत्र द्वित्र्यादीनां राशीनामव्यक्तत्वे संजाते भेदमन्तरेण तत्संकरः स्यादतस्तन्निरासाय अव्यक्तसंज्ञा आह—यावदिति। 'यावत्तावत्' इत्येका संज्ञा। शेषं सुगमम्॥ शालिनीवृत्तमेतत्॥ ७॥

अव्यक्त राशियों की संज्ञा—

पूर्वाचार्यों ने अव्यक्त ( अज्ञातमान ) राशियों की गणना करने के लिये उनकी यावत्तावत्, कालक, नीलक, पीतक, और लोहितक आदि संज्ञा की हैं कि जिसमें वे आपसमें मिल न जावें॥ ७॥

अव्यक्तसंकलनव्यवकलने करणसूत्रं वृत्तार्धम्—

योगोऽन्तरं तेषु समानजात्यो-
र्विभिन्नजात्योस्तु पृथक् स्थितिश्च॥

अव्यक्तसंज्ञा अभिधाय तत्संकलनव्यवकलने उपजातिपूर्वार्धेनाह—योगोऽन्तरमिति। तेषु वर्णेषु मध्ये, रूपेष्वपि द्रष्टव्यम्। समानजात्योः, समाना एका यावत्तावत्त्वादिधर्मरूपा जातिर्य-

योस्तौ। तथा तयोः समानजात्योः पूर्वोक्तो योगोऽन्तरं वा स्यात्। अत्र 'स्यात्' इति पदमुत्तरदलस्थमन्वेति देहलीदीपन्यायेन। 'समानजात्योः' इत्युपलक्षणम्। तेन समानजातीनामित्यपि द्रष्टव्यम्। विभिन्ना जातिर्ययोस्तौ। तयोर्योगेऽन्तरे वा क्रियमाणे पृथक् स्थितिरेव स्यात्। अस्यायमभिप्रायः—रूपस्य रूपेण, यावत्तावतो यावत्तावता, कालकस्य कालकेन, यावत्तावद्वर्गस्य यावत्तावद्वर्गेण, यावत्तावद्घनस्य यावत्तावद्घनेन, एवं कालकवर्गस्य कालकवर्गेण, कालकघनस्य कालकघनेन, कालकनीलकभावितस्य कालकनीलकभावितेन एवं समानजात्योर्योगेऽन्तरे वा कर्तव्ये योगोऽन्तरं वा प्रोक्तवद्भवति। रूपस्य यावत्तावता कालकादिना वा एवं भिन्नजात्योर्योगेऽन्तरे वा पृथक्स्थितिरेव। अत्रैकपङ्क्ताविति द्रष्टव्यम्। अन्यथा योगान्तरज्ञापकाभावादिति॥

अव्यक्तराशिके जोड़ने और घटानेका प्रकार—

यावत्तावत् आदि जो अव्यक्तराशियों के द्योतक वर्ण कल्पना किये हैं वे सजातीय काहिये एकजाति के हों तो उनकायोग और अन्तर कहे हुए प्रकार से करो और यदि विजातीयहों तो एक पङ्क्तिमें लिखदो इसप्रकार क्रिया करने से योग और अन्तर होगा। यहांपर साजात्य ( एकजातिपना ) इस भांति जाननायोग्यहै कि रूपकारूपके साथ, यावत्तावतका यावत्तावतकेसाथ, यावत्तावतवर्ग का यावत्तावत वर्ग के साथ, यावत्तावतघनका यावत्तावतघन के साथ, कालक का कालक के साथ, कालकवर्ग का कालकवर्ग के साथ, कालकघनका कालकघनके साथ इसीप्रकार उन उनवर्गों के चतुर्घात पञ्चघातआदि उन्हीं वर्गोंके चतुर्घात पञ्चघात आदि के सजातीय होते हैं और यावत्तावत, यावत्तावतवर्ग, यावत्तावतघन, कालक, कालकवर्ग, कालघन, .. .. आदि विजातीय कहलाते हैं। यह बात उदाहरणों पर और भी स्पष्ट प्रतीत होगी॥

उपपत्ति—

इसकी युक्ति अतिस्पष्ट है कि ५ पैसे ५ रुपये और ५ असर्फियां इनके द्योतक ( वतलानेवाले ) क्रमसे ५ या, ५ का, ५ नी, यदि कल्पना किये तो राशियोंका योग १५ पैसे या १५ रुपये या १५ असर्फियां नहींहोसक्ता किंतु ‌-)। पैसे ५) रुपये ५)) असर्फियां यही होगा क्योंकि वे आपसमें एकजाति के नहीं हैं इससे सिद्धहुआ कि उनको अलग अलग स्थापितकरना चाहिये। यदि एकजाति के होते तो योग निर्विवादही था इसी प्रकार अन्तरमें भी

सजातीय और विजातीयवर्णों की व्यवस्था जानो इससे 'योगोऽन्तरं तेषु समानजात्योः' यहसूत्र उपपन्नहुआ ॥

उदाहरणम्—

स्वमव्यक्तमेकं सखे सैकरूपं
धनाव्यक्तयुग्मं विरूपाष्टकं च।
युतौ पक्षयोरेतयोः किं धनर्णे
विपर्यस्य चैक्ये भवेत्किं वदाशु ॥ ७ ॥

न्यासः। या १ रू १। या २ रू ८̇। अनयोर्योगे
जातम् या ३ रू ७̇।

आद्यपक्षस्य धनर्णव्यत्यासे

न्यासः। या १̇ रू १̇। या २ रू ८̇। अनयोर्योगे
जातम् या १ रू ९̇।

द्वितीयस्य व्यत्यासे

न्यासः। या १ रू १। या २̇ रू ८।
योगे जातम् या १̇ रू ९।

उभयोर्व्यत्यासे

न्यासः। या १̇ रू १̇। या २̇। या ८। योगे जातम् या ३ रू ७

अथोदाहरणान्याह—स्वमव्यक्तमिति। 'एकरूपयुक्तमेकं धनमव्यक्तम्, इत्येकः पक्षः। 'अष्टभी रूपै रहितं धनमव्यक्तयुग्मम्, इति द्वितीयः पक्षः। एतयोः पक्षयोः संकलने किं फलं स्यात्। अथ पक्षयोर्धनर्णे विपर्यस्य विपर्यासं विधाय युतौ किं फलं स्यात्। इह पूर्वपक्षमात्रव्यत्ययेन उत्तरपक्षमात्रव्यत्ययेन उभयपक्षव्यत्ययेन च प्रश्नत्रयं व्यत्ययाभावे चैक इत्युदाहरणचतुष्टयं द्रष्टव्यम्। 'धनर्णे' इत्यत्र भावप्रधानो निर्देशः ॥

उदाहरण—

यावत्तावत् एक और रूप एक यह पहिला पक्ष है और यावत्तावत् दो रूप आठ ऋण यह दुसरा पक्ष है अब इन दोनों पक्षोंका योग क्या होगा और यदि पहिले पक्ष दूसरे पक्ष के और दोनों पक्ष के ऋण धन चिह्न बदल दिये जावें तो योग क्या होगा॥

(१) न्यास। या १ रू १। या २ रू ८̇। यहां पर पहिले पक्षमें यावत्तावत् १ का और रूप १ का योग २ नहीं होता क्योंकि वे एकजाति के नहीं हैं इसकारण एकपङ्क्ति में लिखने से एकपक्ष सिद्ध हुआ प्रथमपक्ष या१ रू १ इसीप्रकार धन यावत्तावत् २ में से रूप ८ को घटाना है तो 'संशोध्यमानं स्वमृणत्वमेति—,इस सूत्रके अनुसार रूप ८̇ ऋण हुआ अब इन दोनों धन ऋणोंका 'धनर्णयोरन्तरमेव योगः' इस सूत्रके अनुसार ऋण है योग नहीं होता किंतु एकजाति के न होने से अलग अलग स्थापित किये गये तो दूसरापक्ष सिद्ध हुआ द्वितीयपक्ष या २ रू ८̇। योग के लिये दोनों पक्षोंका न्यास।

प्रथम पक्ष या १ रू १<br>
द्वितीयपक्ष या २ रू ८̇

अब कहीहुई रीति के अनुसार धन यावत्तावत् १ और धन यावत्तावत् २ का योग धन यावत्तावत् ३ हुआ। धन रूप १ और ऋणरूप ८̇ इनका योग ऋणरूप ७̇ हुआ। ऐसाही आगे भी जानो॥

(२) पहिले पक्ष के व्यत्यय अर्थात् चिह्न बदलने से ये दो पक्ष सिद्ध हुए।

प्रथम पक्ष या १̇ रू १̇।<br>
द्वितीय पक्ष या २ रू ८।

इनमें सजातीय ऋण यावत्तावत् १̇ और धन यावत्तावत् २ का योग धन यावत्तावत् १ हुआ। इसी प्रकार सजातीय ऋण रूप १̇ और ऋण रूप ८̇ इनका योग ऋणरूप ९̇ हुआ॥

(३) दूसरे पक्षके व्यत्ययकरने से ये दो पक्ष और सिद्ध हुए

प्रथम पक्ष या १ रू १।<br>
द्वितीय पक्ष या २̇ रू ८।

इन में सजातीय धन यावत्तावत् १ और ऋण यावत्तावत् २̇ का योग ऋण यावत्तावत् १̇ हुआ। इसीप्रकार सजातीय धन रूप १ और धन रूप ८ का योग धन रूप ९ हुआ॥

(४) दोनों पक्षों के व्यत्यय करने से ये दो पक्ष और उत्पन्न हुए।

प्रथम पक्ष या १̇ रू १̇<br>
द्वितीय पक्ष या २̇ रू ८

अब इन दो पक्षों में सजातीय ऋण यावत्तावत् १ ऋण यावत्तावत् २ का योग ऋण यावत्तावत् ३ हुआ इसी प्रकार सजातीय ऋण रूप १ और धन रूप ८ इनका योग धन रूप ७ हुआ। इसी प्रकार सर्वत्र ऋण, धन, सजातीय और विजातीय का विवेचन जानो ॥

उदाहरणम्—

धनाव्यक्तवर्गत्रयं सत्रिरूपं
क्षयाव्यक्तयुग्मेन युक्तं च किं स्यात् ॥

न्यासः। याव ३ रू ३। या २̇। योगे जातम् याव ३ या २̇ रू ३।

धनाव्यक्तयुग्माद्दृणाव्यक्तषट्कं
सरूपाष्टकं प्रोह्य शेषं वदाशु ॥ ८ ॥

न्यासः। या २ । या ६̇ रू ८̇। शोधिते जातम् या ८ रू ८

इत्यव्यक्तसंकलनव्यवकलने।

अथ त्रयाणां वैजात्ये सत्युदाहरणं भुजंगप्रयातपूर्वार्धेनाह— त्रिभी रूपैः सहितं धनमव्यक्तवर्गत्रयं क्षयाव्यक्तयुग्मेन युक्तं किं स्यात्तच्चाशु वदेति पूर्वेणान्वयः ॥ अथोत्तरार्धेन व्यवकलनोदाहरणमाह—धनाव्यक्तयुग्मादिति । धनं यद् अव्यक्तयुग्मं तस्मात् रूपाष्टकेन सहितं ऋणमव्यक्तषट्कं प्रोह्य अपास्य शेषं व्यवकलनसंभूतं फलं आशु वदेति ॥

उदाहरण—

रूप तीन करके सहित धन यावत्तावत् वर्ग तीन और ऋण यावत्तावत् दो इनका योग क्या होगा ॥

(१) न्यास। याव ३ रू ३। या २̇। इस उदाहरण में यावत्तावत् वर्ग ३ और रूप ३ इनका यावत्तावत् २̇ के साथ योग नहीं होसक्ता क्योंकि वे परस्पर एक जातिके नहीं हैं इसीकारण उनकी पृथक् स्थितिहुई याव ३ या २̇ रू ३।

उदाहरण—

धनयावत्तावत् दो में से धनरूप आठ करके सहित ऋण यावत्तावत् दो को घटा कर शेष बतलाओ ॥

( १ ) न्यास । या २ । या ६ रू ८ । यहां पर भी यावत्तावत् २ में से यावत्तावत् ६ और रूप ८ घटाने लगे तो 'संशोध्यमानं स्वमृणत्वमेति—' इस सूत्र के अनुसार यावत्तावत् ६ धन और रूप ८ ऋणहुए वाद सजातीयों के योग करने से यावत्तावत् ८ धन रूप ८ ऋण हुआ यही उत्तर है ॥

अव्यक्तराशि के जोड़ने और घटाने का प्रकार समाप्तहुआ ॥

---

अव्यक्तादिगुणने करणसूत्रं सार्धवृत्तद्वयम्—
स्याद्रूपवर्णाभिहतौ तु वर्णो
द्वित्र्यादिकानां समजातिकानाम् ॥ ८ ॥
वधे तु तद्वर्गघनादयः स्यु-
स्तद्भावितं चासमजातिघाते ।
भागादिकं रूपवदेव शेषं
व्यक्ते यदुक्तं गणिते तदत्र ॥ ९ ॥

अथ वर्णगुणनमुपजातिकोत्तरार्धेनोपजातिकया चाह—स्यादिति । वर्णगुणनं द्विधैव संभवति, रूपेण सजातीयवर्णेन विजातीयवर्णेन वा । तत्र रूपेण गुणने 'स्याद्रूपवर्णाभिहतौ वर्णः' इति रूपवर्णाभिहतौ तु वर्णः स्यात् । अस्यायमभिप्रायः—रूपेण वर्णे गुणनीये वर्णेन वा रूपे गुणनीये अङ्कतस्तु गुणनफलं भवति नाम तु वर्णस्यैव । अथ सजातीयवर्णेन गुणने समजातिकानां द्वित्र्यादिकानां वर्णानां वधे तु तद्वर्गघनादयः स्युः ।

एतदुक्तं भवति—यावत्तावता यावत्तावति गुणिते समजात्योर्द्वयोर्घात इति यावत्तावद्वर्गः स्यात् । स चेत्पुनर्यावता गुण्यते तदा समत्रिघातत्वात् यावत्तावद्घनः स्यात् । अयमपि चेत्तेन गुण्यते तदा समचतुर्घातत्वाद् यावत्तावद्वर्गवर्गः स्यात् । असावपि तेन गुणितश्चेत्पञ्चघातत्वाद् यावत्तावद्वर्गघनयोर्घातः स्यात् । एवं षड्घाते यावत्तावद्वर्गघनो यावत्तावद्घनवर्गो वा भवेत् । इत्यादि कालकादीनामपि समद्वित्र्यादिवधे कालकादिवर्गघनाद्यो ज्ञेयाः ।

अथ विजातीयवर्णे न गुणने 'असमजातिघाते तद्भावितं स्यात्, इति विजातीयवर्णयोर्घाते तयोर्वर्णयोर्भावितं स्यात् । तथा यावत्तावता कालके गुणिते यावत्तावत्कालकभावितं स्यात्। कालकेन नीलके गुणिते कालकनीलकभावितं स्यात्। इत्यादि बुद्धिमता ज्ञेयम्। यावत्तावत्कालकभावितं यदि कालकेन गुण्यते तदा यावत्तावत्कालकवर्गभावितं स्यात् । इदमपि यदि यावत्तावता गुण्यते तदा यावत्तावद्वर्गकालकवर्गभावितं स्यात् । एवमग्रेऽपि सुधियावधेयम्। एवं गुणनमभिधायेदानीं भागादिकमाह—भागादिकमिति । शेषं भागादिकं भागवर्गवर्गमूलघनघनमूलादिकं यद् व्यक्तगणित उक्तं तदत्र रूपवदेव ज्ञेयम्।'भाज्याद्धरः शुध्यति-'इत्यादिना भजनफलमवधेयम्।'समद्विघातः कृतिः-'इत्यादिना वर्गो ज्ञेय इति । भागादीनां गुणनपूर्वकत्वाद्गुणनसंज्ञाविशेषस्य चोक्तत्वात्तत्र कोऽपि विशेषो वक्तव्यो नास्तीति भावः । इदमुपलक्षणम् । अत्रासंकरार्थं गुणनफलसंज्ञामात्रमुक्तम् । अङ्कतस्तु गुणनादिकं व्यक्तगणिते यदुक्तं तदत्रापि वेदितव्यम् ॥ ८ ॥ ६ ॥

अव्यक्तराशिके गुणन का प्रकार—

रूप और वर्ण इनके घात करने से गुणनफल वर्ण होताहै । तात्पर्य यह है कि रूप करके वर्ण को गुणने से अथवा वर्ण करके रूप को गुणने से गुणनफल अङ्कात्मक और रूप के स्थान में वर्ण होजाता है अर्थात् 'रू' इस अक्षर के आगे लिखे हुए जो अङ्कहों उनका और यावत्तावत् आदि वर्ण के आगे लिखे हुए अङ्कोंका आपस में व्यक्तगणित में कही हुई रीति के अनुसार गुणन होगा और 'रू' अक्षर के स्थानमें यावत्तावत् कालक नीलक आदि संज्ञाओंके पहिले के वर्ण या, का, नी आदि अक्षर लिखे जाते हैं । सजातीय वर्णों करके सजातीय दो तीन आदि वर्णों के घात करने से उन के वर्ग घन चतुर्घात आदि होते हैं । आशय यह है कि यावत्तावत् को यावत्तावत् से गुणने में उन दो सजातीयों के सम द्विघात होने से यावत्तावत् वर्ग होता है, जो यही ( यावत्तावत् वर्ग ) फिर यावत्तावत् से गुण दिया जावे तो समान तीन घात होनेसे यावत्तावत् घन होगा, वह फिर यावत्तावत् से गुणा जावे तो समान चार घात होने से यावत्तावद्वर्ग वर्ग होगा, वह भी जो यावत्तावत् से गुण दिया जावे तो समान पांचघात होने के कारण यावत्तावत् वर्ग और उस के घन का घात होगा, इसी भांति षड्घात करने में यावत्तावत् के वर्गका

घन या यावत्तावत् के घन का वर्ग होगा, इसी प्रकार कालक आदि वर्णों के समान दो तीन आदि घात करने से उन के ( कालकआदिकोंके ) वर्ग घन आदि होंगे। विजातीय वर्णों के घात करने में उन का भावित होता है अर्थात् यावत्तावत् से कालक को गुणने से यावत्तावत्कालकभावित होगा, कालक से नीलक को गुणने से कालकनीलकभावित होगा, यावत्तावत् कालकभावित जो कालक से गुणदिया जावे तो यावत्तावत्कालकवर्ग भावित होगा, यह जो यावत्तावत् से गुण दिया जावे तो यावत्तावत्वर्ग कालकवर्गभावित होगा, यहां पर लाघव के लिये यावत्तावत्कालकभावित के जघे केवल 'याकाभा' ये उन के आद्याक्षर लिखते हैं। इसप्रकार गुणन की रीति को कहकर अब भागहार आदि कहते हैं—भागहार, वर्ग, वर्गमूल, घन और घनमूल ये जिस प्रकार व्यक्तगणित ( लीलावती ) में कहे हैं वेसाही यहां पर भी जानो अर्थात् 'भाज्याद्धरः शुध्यति—' इस सूत्र के अनुसार भागहार और 'समद्विघातः कृतिः—' इस सूत्र के अनुसार वर्ग को जानो और '—वर्गघनप्रसिद्धावाद्याङ्कतो वविधिरेपकार्यः' इस सूत्र के अनुसार जैसा व्यक्तगणित में आदि से वर्ग और घन सिद्ध किये जाते हैं वेसा यहां पर भी सिद्ध करो॥

उपपत्ति—

रूप कहिये ज्ञातमान १, २, ३, आदि संख्या उनको रूप से गुणदेने में गुणनफल रूपात्मकही होगा यह बात अत्यन्त सुप्रसिद्ध है। रूप से वर्णका गुणने में गुणनफल रूप होगा अथवा वर्ण इस संदेहकी निवृत्ति के लिये अज्ञातराशि को रूपसमूहमानकर युक्ति दिखलाते हैं—कोई एकअन्न सात आढकवाले मान से मापने में एक मान होता है यदि उसे सातसे गुणदेवें तो गुणनफल रूपात्मक होगा या समूहात्मक, जो रूपात्मक मानें तो सात आढक अन्न होगा पर ऐसा मानना उचित नहीं है क्योंकि गुणन करने के प्रथमही सात आढक अन्न विद्यमान था अब गुणन के बाद उनचास आढक अन्न होंगे इसकारण समूहात्मक कहना उचित है तो सात आढक अन्न का समूह सात है इससे 'स्याद्रूपवर्णाभिहतौ वर्णः' यह सूत्रखण्ड उपपन्न हुआ॥ रूप यह एक व्यक्त संख्या का बोधक है उससे गुणन करने में अङ्कों से गुणन होताहै किंतु अक्षरों से नहीं, यदि ऐसा संदेह करो कि रूप और अव्यक्त संख्या के भेद के लिये संख्या के बोधक अङ्कही लिखे जावें रूपके प्रथम अक्षर लिखने का क्या प्रयोजन है तो देखो अङ्कमें ऐसा कोई भेद दिखलाने वाला चिह्न नहीं है कि जिसके होने से रूप और वर्णाङ्कके संनिधि में उनका भेद स्पष्ट प्रतीतहो, इस कारण रूप का आदि अक्षर लिखते हैं॥ अब सजातीय वर्णों के गुणन में वर्ण को रूपसमूह अङ्गीकार करके युक्ति दिखलातेहैं—जैसा सात आढकधान्यका १ एक समूह वर्तमान है इसको इसीसे गुण देने से १ हुआ, अब इस सात आढक के समूहात्मक होनेसे एक से गुणा हुआ समूह अथवा समूह से गुणा हुआ स-

मूह इसका भेद दुर्ज्ञेय होताहै, पर एक गुण्य में गुणक के भेद होने के कारण से गुणनफल में अवश्य भेद होताहै इसलिये गुणनफल को समूह वर्गरूपी कहना उचित है तो वे उनचास आढक हुए इस कारण सजातीय दो वर्णों का घात वर्ग होताहै यह बात सिद्धहुई ॥ इसीप्रकार दो तीन चार आदि सजातीय वर्णों के घात करने से उन के घन, और वर्गवर्ग आदि होते हैं इस्से 'द्वित्र्यादिकानां समजातिकानां वधे तु तद्वर्गघनादयः स्युः' इतना सूत्र खण्ड उपपन्न हुआ ॥

अब विजातीयवर्णों के घातकरने में उनका भावित होता है ऐसा जो पूर्व कहा है उसकी युक्ति दिखलाते हैं—सात आढक धान्यवाला १ एक समूह है और पांच आढक धान्यवाला दूसरा १ एकसमूह है, इन दोनों समूहों का घात १ हुआ, अब इसे सात आढक धान्यवाला समूहनहीं कहसक्ते क्योंकि एक गुणित और समूहगुणित का अभेद होगा, और समूहवर्ग भी नहीं कहसक्ते क्योंकि समूहको अपने से गुणने से और दूसरे समूहके गुणने से जो गुणनफलउत्पन्न होंगे उनका भेदहोना उचित है,इसकारण उन दो समूहोंका घात एक विलक्षणही है, ऐसामानने से ३५ आढक होते हैं और ऐसा होना योग्य भी है इसलिये विजातीय वर्णोंका घात अक्षर से होना युक्त है तहां आचार्यों ने घातकी 'भावित' यह संज्ञा रक्खी यदि 'वध' यह संज्ञाकरते तो कदाचित् यावत्तावत्वर्ग के साथ संकर ( मेल ) होता, 'घात' संज्ञाकरते तो कभी यावत्तावत् घनके साथ संकर होना संभव था, गुणनशब्द के आदि अक्षर लिखने से 'गुह्य' इस अश्लीलशब्दकी भावना होती और हतिशब्द के प्रथम अक्षर लिखने से कदाचित् हरितकवर्ण की भ्रान्ति होगी यदि और किसी शब्द के आदि वर्ण लिखने से संकर आदिक दोष न हो तो उसका लिखना योग्य है तो भी ग्रन्थकारने पूर्व आचार्यों के अनुरोधसे 'भावित' यह संज्ञा की इस्से 'तद्भावितं चासमजातिघाते' यह सूत्रखण्ड उपपन्न हुआ ॥ ८ ॥ ९ ॥

गुण्यः पृथग्गुणकखण्डसमो निवेश्य-
स्तैः खण्डकैः क्रमहतः सहितो यथोक्त्या ।
अव्यक्तवर्गकरणीगुणनासु चिन्त्यो
व्यक्तोक्तखण्डगुणनाविधिरेवमत्र ॥ १० ॥

अथ शिष्यजनसौकर्यार्थं 'गुण्यस्त्वधोधो गुणखण्डतुल्यः—' इत्यादि व्यक्तोक्तखण्डगुणनं वसन्ततिलकया विशदयति—गुण्य इति । गुणकस्य यावन्ति खण्डानि तावत्सु स्थानेषु पृथग् गुण्यो

निवेश्यः । अत्र खण्डानि संज्ञाभेदेन अवगन्तव्यानि । अथ पृथङ् निवेशितो गुण्यस्तैर्गुणकखण्डैः प्रथमस्थाने प्रथमखण्डेन, द्वितीयस्थाने द्वितीयखण्डेन, तृतीयस्थाने तृतीयखण्डेन, एवं क्रमेण 'स्याद्रूपवर्णाभिहतो वर्णः–' इत्यादिना गुणितः सन् यथोक्त्या पूर्वोक्तप्रकारेण 'योगोऽन्तरं तेषु समानजात्योः–' इत्यादिना 'योगे युतिः स्यात् क्षययोः स्वयोर्वा–' इत्यादिना च सहितः । अत्र अव्यक्तगणिते अव्यक्तवर्गकरणीगुणनासु यथा तथा अव्यक्तगुणनासु वर्गार्थे वर्गगुणनासु करणीगुणनासु च व्यक्तोक्तखण्डगुणनाविधिरेवं चिन्त्यः । एवमन्येऽपि गुणनप्रकारा द्रष्टव्याः ॥ १० ॥

अब शिष्यजनोंकी सुगमता के लिये 'गुण्यस्त्वधोधो गुणखण्डतुल्यः–' इस व्यक्तोक्त खण्डगुणन को विशद ( खुलासा ) करते हैं—

गुणक के जितने खण्ड किये जावें उतने स्थानों में अलग अलग गुण्य को स्थापन करो और उन स्थापित कियेहुए गुण्य खण्डों को इस क्रम से गुणो कि प्रथम स्थानमें प्रथम खण्डसे, दूसरे स्थान में दूसरे खण्ड से, तीसरे स्थान में तीसरे खण्ड से इसप्रकार 'स्याद्रूपवर्णाभिहतो तु वर्णः—' इस सूत्र के अनुसार गुणन करने से जो फल उत्पन्न हो उसको पहिले कहे हुए 'योगोऽन्तरं तेषु समानजात्योः—' इस सूत्र की और 'योगे युतिः स्यात् क्षययोः स्वयोर्वा—' इस सूत्र की रीति से जोडो वह गुणनफल होगा यहां अव्यक्त के गुणन करने में वर्ग के गुणन करने में और करणीके गुणन करने में, व्यक्त में जो खण्डगुणन का प्रकार कहा है उसी को जानो । यहां 'खण्डगुणन' यह पद उपलक्षण है इस कारण और भी गुणन के प्रकारों को जानो ॥

उपपत्ति—

इसकी उपपत्ति मत्कृतलीलावती टीका के २२ वें पृष्ठ में देखो ॥

उदाहरणम्–

यावत्तावत्पञ्चकं व्येकरूपं
यावत्तावद्भिस्त्रिभिः सद्विरूपैः ।
संगुण्य द्राग् ब्रूहि गुण्यं गुणं वा
व्यस्तं स्वर्णं कल्पयित्वा च विद्वन् ॥ ९ ॥

न्यासः । गुण्यः या ५ रू १̇ । गुणकः या ३ रू २ ।
गुणनाज्जातं फलम् याव १५ या ७ रू २̇ ।

गुण्यस्य धनर्णत्वव्यत्यासे

न्यासः । गुण्यः या ५̇ रू १ गुणकः या ३ रू २
गुणनाज्जातम् याव १५̇ या ७̇ रू २ ।

गुणकस्य धनर्णत्वव्यत्यासे

न्यासः । गुण्यः या ५ रू १̇ गुणकः या ३̇ रू २̇
गुणनाज्जातम् याव १५̇ या ७̇ रू २ ।

द्वयोर्धनर्णत्वव्यत्यासे

न्यासः । गुण्यः या ५̇ रू १ गुणकः या ३̇ रू २̇
गुणनाज्जातम् याव १५ या ७ रू २̇

उदाहरण—

रूप १ करके हीन यावत्तावत् ५ को रूप २ करके युक्त यावत्तावत् ३ से गुण दो और गुण्य गुणक को धन ऋण अथवा व्यस्त अर्थात् ऋण धन मानकर गुण दो यों करने से जो अलग अलग गुणनफल हों उन्हें बतलाओ ॥

( १ ) न्यास । गुण्य या ५ रू १̇ । गुणक या ३ रू २ । अब स्थान गुणन की रीति से

या ५ रू १̇
या ३ रू २
――――――
याव १५ या ३̇
　　　　या १० रू २̇
――――――
गुणनफल याव १५ या ७ रू २̇ हुआ ॥

( २ ) गुण्य या ५ रू १ में यावत्तावत् पांचको ऋण और ऋण रूप एक को धन मानकर स्थान गुणनकी रीति से

या ५̇ रू १
या ३ रू २
――――――
याव १५̇ या ३
　　　　या १०̇ रू २
――――――
गुणनफल याव १५̇ या ७̇ रू २ हुआ ॥

( ३ ) गुणक या ३ रू २ में यावत्तावत् तीन और रूप दो को ऋण मान कर स्थान गुणन की रीति से

या ५ रू १ं
या ३ं रू २ं
याव १५ं या ३
या १०ं रू २

गुणनफल याव १५ं या ७ं रू २ हुआ ॥

( ४ ) गुण्य या ५ रू १ और गुणक या ३ रू २ में धन ऋण का व्यत्यास अर्थात् उलट फेर कर स्थान गुणन की रीति से

या ५ं रू १
या ३ं रू २ं
याव १५ या ३ं
या १० रू २ं

गुणनफल याव १५ या ७ रू २ं हुआ ॥

## भागहारे करणसूत्रं वृत्तम्–

भाज्याच्छेदः शुध्यति प्रच्युतः सन्
स्वेषु स्वेषु स्थानकेषु क्रमेण ।
यैर्यैर्वर्णैः संगुणो यैश्च रूपै-
र्भागाहारे लब्धयस्ताः स्युरत्र ॥ ११ ॥

पूर्वगुणनफलस्य स्वगुणच्छेदस्य प्रथमपक्षस्य भागहारार्थं न्यासः ।

भाज्यः । याव १५ं या ७ं रू २ं ।
भाजकः । या ३ रू २ ।
भजनादाप्तो गुण्यः या ५ रू १ं

द्वितीयस्य न्यासः ।

भाज्यः । याव १५ं या ७ं रू २ ।
भाजकः । या ३ रू २ ।

भजनेन लब्धो गुणयः या ५̇ रू १ ।

तृतीयस्य न्यासः ।

भाज्यः । याव १५̇ या ७̇ रू २ ।

भाजकः । या ३̇ रू २̇ ।

हरणादाप्तो गुणयः या ५ रू १̇ ।

चतुर्थस्य न्यासः ।

भाज्यः । याव १५ या ७ रू २̇

भाजकः । या ३ रू २̇

हृते लब्धो गुणयः या ५̇ रू १ ।

इत्यव्यक्तगुणनभजने

---

अथ 'भाज्याद्धरः शुध्यति--' इत्यादिना भजनफलसिद्धावपि वर्णसंज्ञावधानार्थं मन्दावबोधनार्थं च पुनः शालिन्या विशदयति--भाज्यादिति । छेदो हरः। स यै र्वर्णै यैं रूपैश्च गुणितः सन् भाज्यात् स्वेषु स्वेषु स्थानेषु यथास्वं समानजातिषु प्रच्युतः सन् शुध्यति नावशिष्यते ता अत्र लब्धयः स्युः। ते वर्णाः तानि च रूपाणि लब्धयः स्युरित्यर्थः ॥ ११ ॥

अव्यक्त राशि के भागहार का प्रकार—

अब 'भाज्याद्धरः शुध्यति—' इस सूत्र के अनुसार भजनफल के सिद्ध होने पर भी वर्णसंज्ञा की परचिति और मन्दजनों के बोध के लिये फिर भी उसे स्पष्ट करते हैं—जिन जिन वर्ण और रूप करके गुणाहुआ भाजक भाज्य से अपने अपने स्थानों में घटायाहुआ शुद्ध हो अर्थात् अवशिष्ट न रहे वे वर्ण और रूप यहां लब्धि होते हैं ॥

उपपत्ति—

इसप्रकार की उपपत्ति मेरी बनाई हुई लीलावती की टीका के ३४ वें पृष्ठ में भली भांति स्पष्ट है ॥

( १ ) भाज्य याव १५ या ७ रू २। भाजक या ३ रू २ यहां भाज्य में पहिले यावत्तावत् वर्ग १५ हैं इसकारण उनमें यावत्तावत् वर्गही को घटाना युक्त है भाजक में पहिले यावत्तावत् ३ हैं उनको रूप से गुणने से 'स्याद्रूपवर्णाभिहतौ तु वर्णः' इस सूत्रके अनुसार वर्णही होता है किंतु उनका वर्ग नहीं होता, यावत्तावत् से गुण देने में समान जातियों के घात होने से यद्यपि यावत्तावत्वर्ग होगा तो भी अङ्कों में तीन होंगे इसलिये शोधन करने पर भी भाज्य में यावत्तावत्वर्ग न घटसकेंगे इसकारण यावत्तावत् पांच से भाजक को गुणने से यावत्तावत्वर्ग पंद्रह होंगे तो घटजायंगे, अब या ५ से भाजक 'या ३ रू २' को गुणदिया तो हुआ याव १५ या १०' इसको भाज्य 'याव १५ या ७ रू २' में यथास्थान घटा दिया तो शेष 'या ३ रू २' बचा 'यावत्तावत् पांच से गुणा हुआ भाजक शुद्ध हुआ है इसलिये यावत्तावत् ५ लब्धि आई। अब भाज्य शेष में यावत्तावत् तीन हैं इस कारण भाजक को रूप से गुणदेनेसे जो गुणनफलहोगा वह भाज्यशेष में घट सकेगा परंतु धन रूप से गुणन करने में 'संशोध्यमानं स्वमृणत्वमेति' इस सूत्र के अनुसार दोनों के ऋण होने से योग होगा तो शुद्धि न होगी इस कारण ऋणरूप से गुणने में शुद्धिहोगी, अब 'रू १' से भाजक 'या ३ रू २' को गुण दिया तो 'या ३ रू २' हुआ उसको 'या ३ रू २' इस भाज्य शेष में घटादिया तो ऋणरूप १ लब्धि मिली, इस प्रकार 'या ५ रू १' यह संपूर्ण लब्धिहुई यही पहिला गुणयथा॥

( २ ) भाज्य याव १५ या ७ रू २। भाजक या ३ रू २। यहां परभी उक्तरीति के अनुसार 'या ५ रू १' यह लब्धिमिली॥

( ३ ) भाज्य याव १५ या ७ रू २। भाजक या ३ रू २। यहां परभी उक्तप्रकार के अनुसार लब्धि 'या ५ रू १ आई॥

( ४ ) भाज्य याव १५ या ७ रू २ भाजक या ३ रू २। उक्तप्रकारसे लब्धि मिली या ५ रू १॥

अव्यक्तराशिके गुणन और भागहारका प्रकारसमाप्तहुआ॥

वर्गोदाहरणम्—

रूपैः षड्भिर्वर्जितानां चतुर्णा-

मव्यक्तानां ब्रूहि वर्गं सखे मे॥ ६॥

न्यासः या ४ रू ६। जातो वर्गः याव १६ या ४८ रू ३६

अथ यद्यपि वर्गसूत्रमन्तरा तदुदाहरणं वक्तुमनुचितं तथापि वर्गस्य समद्विघातरूपत्वाद् गुणनसूत्रेणैव तत्सिद्धेः 'अव्यक्तवर्ग-

करणीगुणनासु चिन्त्यः' इति विशेषोक्तेश्च तदुचितमेवेति शालिन्युत्तरार्धेन तदाह—रूपैरिति। स्पष्टोऽर्थः।

अब यहांपर यद्यपि वर्गसूत्रके कहने के विना उसके ( वर्गके ) उदाहरण का कथन अनुचित प्रतीत होता है तो भी वर्गके समद्विघात रूपहोने से गुणन सूत्रही करके उसका ( वर्गका ) साधन होता है इसकारण वर्गकाउदाहरण कहते हैं—ऋणरूप छ करके रहित यावत्तावत् चारका वर्ग कहो ॥

न्यास । या ४ रू ६ इनका वर्ग करने के लिये स्थान गुणनकी रीति से न्यास।

या ४ रू ६̇
या ४ रू ६̇

याव १६ या २४̇
या २४̇ रू ३६

गुणनफल=याव १६ या ४८̇ रू ३६ येही वर्ग हुआ।

## वर्गमूले करणसूत्रं वृत्तम्—

कृतिभ्य आदाय पदानि तेषां
द्वयोर्द्वयोश्चाभिहतिं द्विनिघ्नीम्।
शेषात्त्यजेद्रूपपदं गृहीत्वा
चेत्सन्ति रूपाणि तथैव शेषम्॥ १२॥

अथ वर्गे दृष्टे कस्यायं वर्ग इति मूलाङ्कज्ञानार्थमुपायमुपजातिकयाह—कृतिभ्य इति। तेषां वर्गराशिगताऽव्यक्तानां मध्ये कृतिभ्यो वर्गेभ्यः पदानि मूलान्यादाय तेषां पदानां परस्परं द्वयोर्द्वयोरभिहतिं द्विनिघ्नीं शेषाद्विशोधयेत्, यदि शुद्धिर्भवेत्तदा तानि तस्य वर्गस्य पदानि भवेयुरित्यर्थादुक्तं भवति।

---

१ यहां पर 'गुण्यस्त्वधोधो गुणखण्डतुल्यः—' इस व्यक्तगणितोक्त खण्डगुणनकी अपेक्षा भी 'स्थानैः पृथग्वा गुणितः समेतः' इसस्थानगुणन करने में अधिक सौकर्य होता है इसकारण प्रायः सबजगे स्थानगुणनहीं की रीति पर गणित दिखलाया है। वर्ग भी इसरीतिसे तुरंत सिद्ध होताहै इसकारण '—वर्गघनप्रसिद्धावाद्याङ्कतो वा विधिरेष कार्यः' इससूत्रके अनुसार जो आद्याङ्कस्थानसे लगाय करके वर्ग आदि सिद्ध कियेजाते हैं उनकी भी कुछ विशेष आवश्यकता नहीं है॥

कृत्योरित्यपि द्रष्टव्यम् । अथ यदि वर्गराशौ रूपाणि सन्ति तर्हि रूपपदं गृहीत्वा शेषं तथैव द्वयोर्द्वयोश्चाभिहतिं द्विनिघ्नीं शेषात्त्यजेदिति । रूपेषु सत्सु यदि रूपपदं न लभ्यते तदा स वर्गराशिर्नेत्यर्थादुक्तं भवति ॥ १२ ॥

अव्यक्तराशिके वर्गमूलका प्रकार—

वर्गराशि में जितने अव्यक्त अर्थात् वर्णहों उनका मूल लो और उन मूलों में से दोदो मूलों के दूनेघात को शेषमें ( जिसवर्गात्मक राशि से मूल लिया गयाथा उसमें ) घटादो तो वे मूल होते हैं, इसीप्रकार यदि वर्गराशि में रूपहोवें तो उनका मूल लेकर उक्त क्रियाकरो, जो रूपोंके होनेपर उनका मूल न मिले तो वह वर्गराशिही नहीं है ॥

उपपत्ति—

राशि का समान दो घात वर्ग होता है, यह पारिभाषिक संज्ञाहै । जिस का वर्ग किया जाताहै वह राशि गुण्य और गुणक दोनों होताहै वहां एकखण्डात्मक वर्ग में किसका यह समद्विघात है इसप्रकार समद्विघात के खोजकरने से मूलकाजानना सुगमहै । अब दो खण्डवाले राशिके वर्ग करने के लिये न्यास ।

गुण्य=या ४ रू ६
गुणक=या ४ रू ६

पहिली पङ्क्ति=याव १६ या २४
दूसरी पङ्क्ति= या २४ रू ३६

गुणनफल=याव १६ या ४८ रू ३६

देखो यहां पहिली पङ्क्ति में पहिले खण्डका (या ४ का वर्ग १६) वर्ग और दोनों खण्डों का घात ( या ४ रू ६ का घात या २४ ) है इसीप्रकार दूसरी पङ्क्ति में दोनों खण्डों का घात ( या ४ रू ६ का घात या २४ ) और दूसरे खण्ड का वर्ग (रू ६ का वर्ग रू ३६ ) है । अर्थात् दोनों पङ्क्ति में दोनों खण्डोंका घात है अब उन दोनों खण्डों का योग करने से दूना दोनों खण्डोंका घात होता है वही द्विगुण दोनों खण्डों का घात या ४८ गुणनफल की पङ्क्ति में लिखा है । इससे साफ मालूम होता है कि दो खण्ड वाले राशि के वर्ग करने में तीन खण्ड होते हैं खण्डोंके वर्ग दूना खण्डों का घात याव १६ या ४८ रू ३६ ॥ तीन खण्डवाले राशिके वर्ग करने के लिये न्यास ।

गुण्य = या ३ का ४ नी ५
गुणक = या ३ का ४ नी ५

पहिली पङ्क्ति = याव ९ या॰ का १२ या॰ नी १५
दूसरी पङ्क्ति = का॰ या १२ काव १६ का॰ नी २०
तीसरी पङ्क्ति = नी॰ या १५ नी॰ का २० नीव २५

गुणनफल = याव ९ या॰ का २४ या॰ नी ३० काव १६ कानी ४० नीव २५

देखो यहां पहिली पङ्क्ति में पहिले खण्डका वर्ग, पहिले खण्डका दूसरे का घात और पहिले खण्ड का तीसरे का घात है। दूसरी पङ्क्ति में दूसरे खण्ड का वर्ग, पहिले खण्डका दूसरे का घात और दूसरे खण्डका तीसरे का घात है। तीसरी पङ्क्ति में तीसरे खण्ड का वर्ग, पहिले खण्डका तीसरे का घात और दूसरे खण्ड का तीसरे का घात है। अर्थात् वर्ग करने में हर एक खण्डों का वर्ग और दूना दोनों खण्डों का घात होता है इसके देखने से 'कृतिभ्य आदाय—' इस सूत्र की उपपत्ति स्पष्ट प्रतीत होती है ॥ १२ ॥

**पूर्वसिद्धस्य वर्गस्य मूलार्थं न्यासः याव १६ या ४८ रू ३६।**
**लब्धं मूलम् या ४ रू ६**

## इत्यव्यक्तवर्गवर्गमूले ।

## इत्यव्यक्तषड्विधम्

---

'रूपैः षड्भिः—' इस प्रश्न के अनुसार सिद्ध किये हुए वर्ग का वर्गमूल के लिये लिखते हैं—

न्यास। याव १६ या ४८ रू ३६। इस वर्गराशि में यावत्तावत् वर्ग सोलह और रूप छत्तीस ये दो वर्ग हैं इन से मूल या ४ रू ६ मिले, इन दोनों के घात द्विगुण को या ४८ 'संशोध्यमानं स्वमृणत्वमेति—' इससूत्रके अनुसार शेष या ४८ में घटाने लगे तो ऋणोंका योग होजाने से न घटा इस लिये उन दोनों में से एकको ऋण कल्पना किया तो द्विगुण दोनोंका घात या ४८ 'संशोध्यमानमृणं धनं भवति' इसरीति से धन होनेपर धनर्णयोरन्तरमेव योगः' इसके अनुसार घटगया तो या ४ रू ६ अथवा या ४ रू ६ मूल मिला परं च यहांपर पूर्व मूलही अपेक्षित है क्योंकि इसी मूलका वर्ग कियाथा ॥

अव्यक्त राशिके वर्ग और वर्गमूल का प्रकार समाप्त हुआ।

अव्यक्त षड्विध समाप्तहुआ

---

## अथानेकवर्णषड्विधम् ।

तत्र संकलनव्यवकलनयोरुदाहरणम्—

यावत्तावत्कालक—
नीलकवर्णास्त्रिपञ्चसप्तधनम् ।
द्वित्र्येकमितैः क्षयगैः
सहिता रहिताः कति स्युस्तैः ॥ १० ॥

न्यासः । या ३ का ५ नी ७ । या २̇ का ३̇ नी १̇ । योगे जातम् या १ का २ नी ६ । वियोगे जातम् या ५ का ८ नी ८ ।

इत्यनेकवर्णसंकलनव्यवकलने

---

इसप्रकार एक वर्णषड्विध के उदाहरण कहकर अब अनेकवर्णषड्विध के उदाहरण कहते हैं—वहां भी पहिले अनेकवर्ण के संकलन और व्यवकलनका उदाहरण—

धन यावत्तावत् तीन, कालक पांच और नीलक सात ये ऋण यावत्तावत् दो, कालक तीन और नीलक एक करके सहित और रहित क्या होंगे ॥

न्यास ।
योज्य या ३ का ५ नी ७
योजक या २̇ का ३̇ नी १̇ } इनका योग या १ का २ नी ६ हुआ ।

न्यास ।
वियोज्य या ३ का ५ नी ७
वियोजक या २̇ का ३̇ नी १̇ } इनका अन्तर उक्तप्रकारके अनुसार या ५ का ८ नी ८ हुआ

अनेकवर्ण का संकलन और व्यवकलन समाप्त हुआ ॥

गुणनादेरुदाहरणम् ——

यावत्तावत्त्रयमृणमृणं कालकौ नीलकः स्वं
रूपेणाढ्या द्विगुणितमितैस्ते तु तैरेव निघ्नाः ।
किं स्यात्तेषां गुणनजफलं गुण्यभक्तं च किं स्या-
द्गुण्यस्याथ प्रकथय कृतिं मूलमस्याः कृतेश्च ॥ ११ ॥

न्यासः। रू १० क ६० क ५२ क १२। अत्र किल वर्गे करणीत्रयमस्तीति तत्करणीद्वयद्विपञ्चाशद्द्वादशमितस्य 'क ५२ क १२' तुल्यरूपाण्यपास्य ये मूलकरण्यावुत्पद्येते 'क ८ क २' तयोरल्पयानया चतुर्गुणया ८ द्विपञ्चाशद्द्वादशमितयोरपवर्तौ न स्यात् अतस्ते न शोध्ये। यत उक्तम्—'उत्पत्स्यमानयैवम्—' इत्यादि। अत्र 'अल्पया' इत्युपलक्षणम्। तेन क्वचिन्महत्यापि। तदा (यां) मूलकरणीं रूपाणि प्रकल्प्यान्ये करणीखण्डे साध्ये सा महती प्रकल्प्येत्यर्थः॥

अथ 'वर्गे करणीत्रितये—' इत्यादिनियमेनापि मूलग्रहणेऽग्रिमनियमं विना मूलं दुष्टमित्यत्रोदाहरणमार्ययाह—वर्गे इति। स्पष्टार्थेयम्॥

अब 'वर्गे करणीत्रितये—' इस नियम के अनुसार मूल ग्रहण करने पर भी अगिले नियम विना मूल अशुद्ध होगा यह दिखलाने के लिये उदाहरण—

जिस वर्ग में रूप दश करके सहित करणी साठ करणी बावन और करणी बारह हैं उसका मूल क्या होगा॥

यहांपर करणीखण्ड तीन हैं इसलिये रूप वर्गमें क ५२ और क १२ के समान रूप घटाने से ३६ शेष रहा, इस का मूल ६ हुआ, इस को रूप १० में जोड़ने और घटाने से १६ और ४ हुए, इन का आधा ८। २ हुआ, इन में २ मूलकरणी और ८ रूप कल्पना किया, रूपका वर्ग ६४ हुआ, इस में शेष करणी ६० के तुल्य रूप घटाने से ४ शेष बचा, इस का मूल २ हुआ, इस को रूप ८ में जोड़ने घटाने से १० और ६ हुए, इनका आधा ५ और ३ हुआ. इस प्रकार क २ क ३ क ५ ये मूलकरणी हुईं। परंतु यह मूल ठीक नहीं है क्योंकि इसका वर्ग रू १० क २४ क ४० क ६० है। इसीलिये 'अल्पया चतुर्गुणया, यासामपवर्तः स्याद्रूपकृतेस्ता विशोध्याः स्युः,' यह विशेष कहा है। देखो यहां छोटी करणी २ है, इस को चतुर्गुण किया तो ८ हुए, इस का शोधित क ५२ क १२ में अपवर्तन नहीं लगता इस कारण मूल अशुद्ध है। यहां जो छोटी करणी को चौगुनी करके शोधित

करणीखण्डों में अपवर्तन देना कहा है सो उपलक्षण है इसलिये कहीं चौगुनी बड़ी करणी का भी शोधित करणीखण्डों में अपवर्तन देते हैं। जिस मूल करणी को रूप मानकर और दो करणीखण्ड साधे जाते हैं वह महती अर्थात् बड़ी करणी है॥

उदाहरणम्—

अष्टौ षट्पञ्चाशत्
षष्टिः करणीत्रयं कृतौ यत्र।
रूपैर्दशभिरुपेतं
किं मूलं ब्रूहि तस्य स्यात्॥ १९॥

न्यासः। रू १० क ८ क ५६ क ६०। अत्राद्यखण्डद्वये 'क ८ क ५६' शोधिते उत्पन्नयाऽल्पया चतुर्गुणया ८ तयोः खण्डयोरपवर्तनलब्धे खण्डे १।७ परं शेषविधिना मूलकरण्यौ नोत्पद्येतेऽन्तः खण्डे न शोध्ये। अन्यथा शोधने कृते मूलं नायातीत्यतस्तदसत्॥

अथात्र 'उत्पत्स्यमानयैवं मूलकरण्याल्पया चतुर्गुणया। यासामपवर्तः स्याद्रूपकृतेस्ता विशोध्याः स्युः, इति नियमे सत्यपि मूलग्रहणेऽग्रिमनियमाभावे मूलमसदित्यत्रोदाहरणमार्याह—अष्टाविति। यत्र कृतौ वर्गे दशभी रूपैरुपेतं सहितम् 'अष्टौ षट्, पञ्चाशत्, षष्टिः, इदं करणीत्रयं वर्तते तत्र वर्ग पदं किं स्यादिति ब्रूहि॥

अब 'उत्पत्स्यमानयैवं—' इस नियमके करने परभी जो मूल साधते हैं उसमें अगिले नियम के विना मूल अशुद्ध होता है यह दिखलाने के लिये उदाहरण—

जिस वर्ग में रूपदश करके सहित करणी आठ, करणी छप्पन और करणी साठ हैं वहां क्या मूल होगा॥

यहां उक्तनियम के अनुसार दो करणीखण्ड घटाना चाहिये इसलिये रूपवर्ग १०० में क ५६ और क ८ के समान रूप घटाने से शेष ३६ बचा, इस का मूल ६ आया, इसको रूपमें जोड़ने और घटाने से १६। ४ हुए, इनका आधा ८। २ हुआ, ये करणीखण्ड हुए, इन में से बड़े करणीखण्डका रूप

मानकर वर्ग किया तो ६४ हुआ, इसमें क ६० के तुल्य रूप घटा देनेसे ४ शेष रहा, इसका मूल २ हुआ, इसको रूप ८ में जोड़ने और घटाने से १०।६ रूप, इन का आधा ५ । ३ हुआ, ये मूलकरणी हुईं, इसभांति क २ क ३ क ५ मूल हुआ, परंतु यह मूल अशुद्ध है क्योंकि चौगुनी छोटी करणी का शोधित क ८ क ५६ में अपवर्तन देनेसे १ और ७ ये खण्ड उत्पन्न हुए और शेषविधि से क ५ क ३ आती हैं इसलिये रूपवर्ग में 'क ८ क ५६' इन खण्डों को नहीं घटाना चाहिये ॥

उदाहरणम्—

चतुर्गुणाः सूर्यतिथीषुरुद्र-
नागर्तवो यत्र कृतौ करण्यः
सविश्वरूपा वद तत्पदं ते
यद्यस्ति बीजे पटुताभिमानः ॥ २० ॥

न्यासः । रू १३ क ४८ क ६० क २० क ४४ क ३२ क २४। अत्र करणीषट्के तिसृणां करणीनां तुल्यानि रूपाणि प्रथमं रूपकृतेरपास्य मूलं ग्राह्यम्, पश्चाद्द्वयोः, तत एकस्याः, एवं कृतेऽत्र मूलाभावः । अन्यथा तु प्रथमसाद्यकरण्यास्तुल्यानि रूपाण्यपास्य, पश्चाद्द्वितीयतृतीययोः, ततः शेषाणां रूपकृते विशोध्यानीतं मूलम् क १ क २ क ५ क ५ तदिदमप्यसत् यतोऽस्य वर्गोऽयम् रू २३ क ८ क ८० क १६०। यैरस्य मूलानयनस्य नियमो न कृतस्तेषामिदं दूषणम् । एवंविधवर्गे करणीनामासन्नमूलकरणेन मूलान्यानीय रूपेषु प्रक्षिप्य मूलं वाच्यम् ।

अथ वर्गे षट्प्रभृतिषु करणीखण्डेष्वप्येवमेवेति व्याप्तिं प्रदर्शयितुमुपजातिकयोदाहरणमाह—चतुर्गुणा इति । हे गणक, तेतव यदि बीजे पटुताभिमानः पाटवाहंकारोऽस्ति तर्हि यत्र कृतौ सूर्य

(१२) तिथी (१५) पु (५) रुद्र (११) नाग (८) तैवः (६) चतुर्गुणाः करण्यः सन्ति। किं भूताः। सविश्वरूपाः त्रयोदशसंख्याकै रूपैः सहिताः। तत्पदं वर्गमूलं वद कथय॥

उदाहरण—

जिस वर्ग में रूप तेरह करके सहित करणी अड़तालीस, करणी साठ, करणी बीस, करणी चौवालीस, करणी बत्तीस और करणी चौबीस हैं उस का वर्गमूल क्या होगा॥

यहां करणीखण्ड छ हैं, इसलिये पहिले रूपवर्ग में तीन करणी खण्डके समान रूप घटाकर मूल लेना चाहिये, फिर दो करणी के तुल्य, फिर एक करणी के तुल्य, इस प्रकार क्रिया करनेसे मूल नहीं आता तो अनियम से रूपवर्ग १६९ में पहिली करणी ४८ के तुल्य रूप घटा नेसे १२१ अवशिष्ट रहा, इसका मूल ११ आया, इसको रूप १३ में जोड़ने घटाने से २४।२ हुए इनका आधा १२ और १ हुआ, इनमें से बड़े खण्डको रूप मानकर वर्ग किया तो १४४ हुआ, इसमें क ६० क २० के तुल्य रूप घटाने से ६४ बचा, इस का मूल ८ हुआ, इसे रूप १२ में जोड़ने और घटाने से २०।४ हुए, इन का आधा १० और २ हुआ, इनमें से बड़े खण्ड १० को रूप मानकर वर्ग किया तो १०० हुआ इस में क ४४ क ३२ और क २४ के तुल्य रूप घटाने से शेष ० बचा, इसके मूलको रूपमें जोड़ने और घटाने से १०। १० हुए, इन का आधा ५। ५ हुआ, इसभांति 'क १ क २ क ५ क ५' यहमूल आया परंतु यह ठीक नहीं है क्योंकि इसका वर्ग 'रू १३ क ८ क २० क २० क ४० क ४० क १००' यहहै, इसमें यथासंभव करणीखण्डों का योग करने से रू २६ क ८ क ८० क १६० हुआ। जिन आचार्यों ने मूलके आनयन विषयमें नियम नहीं कहा उनको यह दूषणहै। ऐसे स्थल में करणी खण्डोंका आसन्न मूल लेकर उसे रूप में जोड़ दो और उसको मूल कहो।

अथ 'महती रूपाणि' इत्युपलक्षणम्, यतः क्वचिदल्पापि। तत्रोदाहरणम्—

चत्वारिंशदशीति-
द्विशतीतुल्याः करण्यश्चेत्।
सप्तदशरूपयुक्ता-
स्तत्र कृतौ किं पदं ब्रूहि॥ २१॥

न्यासः। रू १७ क ४० क ८० क २००। शोधिते

जाते खण्डे क १० क ७ । पुनर्लब्धीं करणीं रूपाणि कृत्वा लब्धे करण्यौ क ५ क २ । एवं मूलकरणीनां न्यासः । क १० क ५ क २ ।

## इति करणीषड्विधम्

## इति (षट्) त्रिंशत्परिकर्माणि ।

कश्चिदल्पापि रूपाणीत्यत्रोदाहरणमुदीत्याह—चत्वारिंशदिति। 'अशीतिः' इति रेफान्तः पाठो न युक्तः । स्पष्टार्थः ॥

इत्याचार्यश्रीसरयूप्रसादसुत—दुर्गाप्रसादोन्नीते लीलावतीहृदयग्राहिणि बीजविलासिनि करणीषड्विधं समाप्तम् ॥

उदाहरण—

जिस वर्गमें रूप सत्तरह करके सहित करणी चालीस, करणी अस्सी और करणी दोसव हैं वहां क्या वर्गमूल होगा ॥

यहां रूपवर्ग २८९ में क ८० क २०० के तुल्य रूप घटाकर उक्तविधि से १० । ७ करणीखण्ड उत्पन्नहुए, इन में छोटे करणीखण्ड को रूप मानकर कहे हुए प्रकार से ५ । २ करणीखण्ड हुए, इस भांति क १० क ५ क २ मूल हुआ । यह मूल शुद्ध है क्योंकि इसका वर्ग ' रू १७ क ४० क ८० क २००, होता है । यहां पहिली मूलकरणी १० और ७ हैं, इन में बड़ी करणी को चतुर्गुण किया तो ४० हुई इसका घटायेहुए ' क ८० क २००' इन करणीखण्डों में अपवर्तन देनेसे २ । ५ करणीखण्ड लब्ध हुए और शेष विधिसे भी येही खण्ड आते हैं इसलिये वह मूल शुद्ध है । और जो (२४) वें सूत्र के भाष्य में कह आये हैं कि चौगुनी छोटी करणीका जिन वर्गस्थानीय करणीखण्डों में अपवर्तन लगै वे रूपवर्ग में घटाने के योग्य हैं सो उपलक्षण है इसीलिये यहांपर चौगुनी बड़ी करणी का शोधित करणीखण्डों में अपवर्तन दिया है ॥

सोपपत्तिक करणी षड्विध समाप्त हुआ

दुर्गाप्रसादरचिते भाषाभाष्ये मिताक्षरे ।
वासनाभङ्गिसुभगं करणीषड्विधं गतम् ॥

---

अयं पाठष्टीकापुस्तके नोपलभ्यते. तथाच '—षड्विधचतुष्टयमुक्त्वा—' इति बीजनवाङ्कुरस्य [illegible] पुस्तके [illegible] प्रतीयते, किं च अनेकवर्णषड्विधगणनया कथंचित्त्रिंशत्परि[illegible]णि [illegible] टीकाविसंवादान्न मृष्टु ॥

## अथ कुट्टकः ।

भाज्योहारः क्षेपकश्चापवर्त्यः
केनाप्यादौ संभवे कुट्टकार्थम् ।
येन च्छिन्नौ भाज्यहारौ न तेन
क्षेपश्चैतद्दुष्टमुद्दिष्टमेव ॥ २६ ॥

एवं सामान्यतोऽव्यक्तक्रियोपयुक्तं षड्विधचतुष्टयमुक्त्वा सांप्रतमनेकवर्णसमीकरणप्रक्रियोपयुक्तं कुट्टकमाह– कुट्टको नाम गुणकः । हिंसावाचकशब्दैर्गुणनाभ्युपगमात् । योगरूढ्या[1] गुणकविशेषश्चायम् । कश्चिद्राशिर्येन गुणित उद्दिष्टक्षेपयुतोन उद्दिष्टहरेण भक्तः सन्निःशेषो भवेत्स गुणकः कुट्टक इति पूर्वेषां व्यपदेशात् । तत्र कुट्टकज्ञानार्थं प्रथममितिकर्तव्यतामुद्देशखिलत्वं च शालिन्या निरूपयति– भाज्यो हार इति । "कश्चिद्राशिर्येन गुणित उद्दिष्टक्षेपेण युतोन उद्दिष्टहरेण भक्तः सन्निःशेषः स्यात् तस्य गुणकविशेषस्य 'कुट्टकः' इति संज्ञा" इति प्रागेवाभिहितम् । अत्रागता लब्धिर्लब्धिसंज्ञैव । हरो हरसंज्ञ एव । क्षेपोऽपि क्षेपसंज्ञ एव । अन्वर्थसंज्ञाश्चैताः । यो राशिर्गुण्यते तस्य 'भाज्यः' इति संज्ञा । भजनयोगात् । अस्य कुट्टकस्य ज्ञानार्थमादौ स भाज्यो हारः क्षेपकश्च केनापि तुल्येनाङ्केनापवर्त्यः । भाज्यहारक्षेपा एकेनैवाङ्केनापवर्त्या इत्यर्थः । कस्मिन्सति अपवर्तनसंभवे सति । अपवर्तनं नाम निःशेषभजनम् । तच्चैकातिरिक्तेनाभिन्नेन ज्ञेयम् । अन्यथा 'संभवे' इत्यस्यानुपपत्तेः । एकेन भिन्नेन वा केनचिदङ्केन सर्वत्रापवर्तनसंभवात् । 'तौ भाज्यहारौ दृढसंज्ञकौ स्तः' इत्यस्य व्याख्यानावसरे "'दृढाः' इत्यन्वर्थसंज्ञा । पुनर्नापवर्तन्ते न क्षीयन्त इत्यर्थः" इति बुद्धिविलासिन्यां श्रीगणेशदैवज्ञैरप्युक्त एवायमर्थः । भाज्यहारक्षेपाणम-

---

[1] यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् ।

पवर्तनसंभवे सत्यवश्यमपवर्त्या एव । अन्यथा कुट्टको न संभवतीति सिद्धम् ॥ उद्देशस्य खिलत्वज्ञापनार्थमाह—येनेति । येनाङ्केन भाज्यहारौ छिन्नावपवर्तितौ तेनेवाङ्केन क्षेपश्चेन्न छिन्नः अपवर्तितो न स्यात्तर्हि एतदुद्दिष्टं पृच्छकेन पृष्टं दुष्टमेव । अयं भाज्यो येन केनापि गुणितस्तेन क्षेपेण युतोनस्तेन हरेण भक्तः सन् कदाचिदपि निःशेषो न भवेदित्यर्थः ॥ २५ ॥

कुट्टक ।

इस भांति सामान्य वीजक्रिया के उपयोगी धनर्णषड्विध, खषड्विध, वर्णषड्विध और करणीषड्विध कहकर अव अनेकवर्ण समीकरण के अर्थ कुट्टक का निरूपण करते हैं—उद्दिष्टराशि जिस अङ्क से गुणाहुआ उद्दिष्टक्षेप के जोड़ने अथवा घटाने से और उद्दिष्ट भाजक के भाग देने से निःशेष हो उस गुणक की 'कुट्टक' यह संज्ञा की है। यहां पर जो राशि गुणा जाता है उसे भाज्य, जो जोड़ा अथवा घटाया जाता है उसे क्षेप, जिसका भाग दिया जाताहै उसे हार और जो लब्धि आती हैं उसे लब्धि कहते हैं । ये संपूर्ण संज्ञा अन्वर्थ अर्थात् यथार्थ हैं।

अव कुट्टक के ज्ञानके लिये पहिले क्या करनाचाहिये सो कहते हैं—

कुट्टक के जानने के लिये पहिले भाज्य, हार और क्षेपमें किसी एकही समान अङ्कका अपवर्तन दो, (अपवर्तन वह कहलाताहै कि जिसका पूरा पूरा भाग लगि जावे) और वह अपवर्तन की संख्या एक अथवा भिन्न न हो क्योंकि एक वा भिन्न अङ्क का सर्वत्र अपवर्तन लग सकताहै । इसभांति अपवर्तन देने से भाज्य और हार अपवर्तितहों परंतु क्षेप न अपवर्तित हो तो वह उदाहरण दुष्ट अर्थात् अशुद्ध होगा ॥

उपपत्ति—

अपवर्तन दियेहुए भाज्य भाजकों पर से जैसी लब्धि आती है वैसेही किसी एक अङ्कसे गुणेहुए अथवा अपवर्तन दियेहुए भाज्य भाजकोंपर से आतीहै यहबात प्रसिद्धहै। प्रकृतमें किसी गुणक से गुणाहुआ धन वा ऋण क्षेप करके जुड़ाहुआ कल्पित भाज्य भाज्य होताहै और भाजक यथास्थित रहताहै, यहां भाजकके दोखण्ड होतेहैं—गुणकसे गुणाहुआ कल्पितभाज्य पहिला खण्ड। क्षेप दूसरा खण्ड। इन दोनों खण्डोंका योग भाज्यहै, भाज्य और भाजकमें अपवर्तन देनेपरभी लब्धिमें विकार नहींहोता, इसलिये जिसअङ्क करके भाजक अपवर्तित हुआ है उसीकरके खण्डद्वयरूप भाज्य भी अपवर्तित होगा तहां खण्डोंका योग अपवर्तित, अपवर्तित खण्डों का योग ये तुल्य होते हैं। जैसा—$\frac{६}{९}$ इन भाज्य भाजकों में तीन का अपवर्तन देनेसे $\frac{२}{३}$ ये अपवर्तित भाज्य

भाजक हुए । अथवा, ९ । १८ ये भाजकके खण्ड किये, इनमें तीन का अपवर्तन देनेसे ३ । ६ हुए, इन दोनों खण्डोंका योग करनेसे वही अपवर्तित भाज्य ९ हुआ । इसी भांति भाज्यके दोसे ज्यादे भी खण्ड करके उनमें अपवर्तन दो और उनअपवर्तित खण्डोंका योग करो वह अपवर्तित भाज्यहोगा इसलिये भाजकमें अपवर्तन देनेसे गुणक से गुणाहुआ कल्पित भाज्य और क्षेप होताहै।यद्यपि गुणक के न जानने से गुणकगुणित भाज्य भी नहीं जानते तो उसमें क्योंकर अपवर्तन होसकेगा तथापि कल्पितभाज्यमें अपवर्तन देकर पश्चात् उसे गुणक से गुण दो तो कल्पितभाज्यरूपी भाज्यखण्डही अपवर्तित होगा क्योंकि गुणेहुए में अपवर्तन देनेसे अथवा अपवर्तन दियेहुए को गुणने से कुछ विशेष नहीं होता तो कल्पित भाज्य जिस गुणक करके गुणा हुआ भाज्यखण्ड होताहै उसी से गुणाहुआ अपवर्तित भाज्यभी अपवर्तित भाज्यखण्ड होगा और अपवर्तितक्षेप दूसरा खण्ड, इस भांति भाज्य हार और क्षेप अपवर्तितहों अथवा अनपवर्तितहों तोभी गुण लब्धिमें विशेष नहीं होता इसकारण लाघवार्थ भाज्य हार और क्षेप अपवर्तित किये जाते हैं इसलिये 'भाज्यो हारः–' यह श्लोकार्ध उपपन्न हुआ ॥

कुट्टकः

गुणगुणित भाज्य के समान एक खण्ड, क्षेपके समान दूसरा खण्ड, हरसे भागे हुए उन खण्डों का योग और हरसे भागा हुआ खण्डयोग ये परस्पर तुल्य होतेहैं । जैसा–गुणगुणित भाज्य ५ × २२१ = ११०५ । क्षेप ६५ । ये हर १९५ से भागे हुए $\frac{११०५}{१९५}, \frac{६५}{१९५}$ । इनका योग $\frac{११७०}{१९५}$ यह भाज्य ११०५ क्षेप ६५ इन के योग ११७० हर १९५ से भागे हुए $\frac{११७०}{१९५}$ के समान है ॥ केवल भाज्य और भाजक परसे जैसी लब्धि आती है वैसीही उनमें अपवर्तन देने परभी आती है तो $\frac{११०५}{१९५}, \frac{६५}{१९५}$ इन खण्डों में १३ का अपवर्तन देने से $\frac{८५}{१५}, \frac{५}{१५}$ हुए इन का योग $\frac{९०}{१५}$ हुआ । अथवा उन खण्डों के योग $\frac{११०५}{१९५} + \frac{६५}{१९५} = \frac{११७०}{१९५}$ में इष्टाङ्क १३ का अपवर्तन देनेसे वही हर भक्त योग हुआ $\frac{९०}{१५}$ । यहां गुण से गुणित इष्टाङ्क से अपवर्तित अथवा इष्टाङ्क से अपवर्तित और गुण से गुणित भाज्य में अन्तर नहीं पड़ता तो यदि पहिले लिखे हुए खण्डों के योग में $\frac{११७०}{१९५} = \frac{९०}{१५}$ अपवर्तन देते हैं तो $\frac{११०५}{१९५}, \frac{६५}{१९५}$ इन खण्डों में भी अपवर्तन देना उचित है नहीं तो क्योंकर फलकी समता होगी इसलिये भाज्य और हार की तरह क्षेपक मेंभी अपवर्तन का अत्यावश्यक है इससे 'येन च्छिन्नौ भाज्यहारौ न तेन क्षेपः–' यह श्लोक का उत्तरार्ध उपपन्न हुआ ॥

परस्परं भाजितयोर्ययोर्यः
शेषस्तयोः स्यादपवर्तनं सः ।

तेनापवर्तेन विभाजितो यौ
तौ भाज्यहारौ दृढसंज्ञकौ स्तः ॥ २७ ॥
मिथो भजेत्तौ दृढभाज्यहारौ
यावद्विभाज्ये भवतीह रूपम् ।
फलान्यधोधस्तदधो निवेश्यः
क्षेपस्तथान्त्ये खमुपान्तिमेन ॥ २८ ॥
स्वोर्ध्वे हतेऽन्त्येन युते तदन्त्यं
त्यजेन्मुहुः स्यादिति राशियुग्मम् ।
ऊर्ध्वो विभाज्येन दृढेन तष्टः
फलं गुणः स्यादधरो हरेण ॥ २९ ॥

अथापवर्तनाङ्कं कुट्टकस्येतिकर्तव्यतां चोपजातित्रयेणाह—परस्परमित्यादि । ययो राश्योः परस्परमन्योन्यं भाजितयोः सतोर्यः शेषाङ्कः स तयोरपवर्तनं स्यात् । तेन तौ निःशेषं भज्येते एव । एतदुक्तं भवति—हरेण भाज्ये भक्ते यच्छेषं तेनापि स हरो भाजनीयः, तच्छेषेणापि भाज्यशेषं, तेनापि हरशेषमिति । पुनः पुनः परस्परभजने क्रियमाणे यद्यन्ते रूपं शेषं स्यात्तदा तौ नापवर्तेते एव, रूपस्यैव शेषत्वात्तेनापवर्ते भाज्यहारक्षेपाणामविकार एव । यदा तु शून्यं शेषं स्यात्तदा हरीभूतं यत्प्राक् शेषमधः स्थापितं तदेव भाज्यहारयोरपवर्तनं स्यात् शेषो ह्यपवर्तनाङ्कः । तस्मादन्तिमशेषोऽङ्क एवापवर्तनाङ्कः । एवं ज्ञातेनापवर्तनाङ्केन यौ भाज्यहारौ विभाजितौ तौ दृढसंज्ञकौ स्तः । तेनैव क्षेपोप्यपवर्त्यः । 'भाज्यो हारः क्षेपकश्चापवर्त्यः' इत्युक्तत्वात् । सोऽपि दृढसंज्ञः स्यात् । अथ तौ दृढभाज्यहारौ उक्तवन्मिथः परस्परं तावद्भजेद्यावद्विभाज्ये भाज्यस्थाने रूपं भवेत् । इहैतेषु परस्परभजनेष्वागतानि फलान्यधोऽधो निवेश्यानि । फलं च फले च फलानिच

फलानि । द्वन्द्वैकशेषः । तेषां फलानां वल्लीवदधोऽधः स्थापितानामधोभागे क्षेपो निवेश्यस्तथा तेषामप्यधोऽन्ते खं निवेश्यम् एवं वल्ली जायते । तत उपान्तिमेनाङ्केन स्वोर्ध्वे स्वोर्ध्वस्थितेऽङ्के हते अन्त्येनाङ्केन युते च सति तदन्त्यं त्यजेत् इति मुहुः । 'उपान्तिमेन स्वोर्ध्वे हतेऽन्त्येन युते तदन्त्यं त्यजेत्' इति पुनः पुनः कृते राशियुग्मं स्यात् । तत्रोर्ध्वराशिर्दृढेन विभाज्येन तष्टः सन् फलं भवेत् । फलं नाम लब्धिः । अधरोऽधस्तनो राशिर्दृढेन हरेण तष्टः सन् गुणः स्यात् । 'तक्षू त्वक्षू तनूकरणे' इति धातोः कर्मणि क्तः । तष्टस्तनूकृतोऽवशेषित इति यावत् । अत्र 'तष्टः' इत्यनेन भक्तावशेषितो राशिर्ग्राह्यो नतु लब्धिरित्यर्थः । तेन गुणेन दृढभाज्ये गुणिते दृढक्षेपयुतोने दृढहरेण भक्ते शेषं न स्यादिति । उद्दिष्टेष्वपि भाज्यहारक्षेपेषु ते एव गुणलब्धी स्त इत्यर्थसिद्धमविशेषात् ॥

अपवर्तनाङ्क और दृढ भाज्यहार क्षेप के जानने का प्रकार—

उद्दिष्ट दो राशियों के आपस में भाग देनेसे जो शेष बचै वह उनका अपवर्तनाङ्क होगा अर्थात् उसकरके वे दोनों राशि निःशेष भागे जायगे, तात्पर्य यहहै कि भाज्य में हरका भाग देनेसे जो शेष बचै उसका हरमें भाग दो और उस हरशेषका भाज्यशेषमें भागदो, इसभांति वार वार क्रिया करनेसे अन्त में जो रूप शेष रहै उससे वे भाज्य हार और क्षेप अविकृतही रहेंगे अर्थात् छोटे न होंगे । यदि शून्य शेपवचै तो भाजकरूप भाज्य के नीचे स्थापितकिया हुआ पहिला शेषही उनका अपवर्तनाङ्क होगा इसप्रकार ज्ञातहुआ जो अपवर्तनका अङ्क उससे अपवर्तन दियेहुए भाज्य हार और क्षेप दृढसंज्ञक कहलाते हैं। और उन दृढसंज्ञक भाज्यहारों को परस्पर तबतक भागते जाओ जबतक कि भाज्य के स्थानमें रूप न होजावे इस भांति जो लब्धि मिलें उन्हें एकके नीचे एक इसक्रमसे लिखो और उनलब्धियों के नीचे क्षेपको लिखकर शून्यलिखो, यों करनेसे एक ऊर्ध्वाधर अङ्कोंकी पंक्ति उत्पन्न होगी उसकीवल्ली संज्ञा की है । उपान्तिम अर्थात् अन्त के समीपवाले अङ्क करके उसके ऊपरवाले अङ्क को गुणदो और उसमें अन्तवाले अङ्कको जोड़दो बाद उसे विगाड़ दो यों वारवार क्रिया करतेजाओ जबतक कि दोराशि न होजावें बाद उनमें से ऊपरवाला राशि दृढ भाज्यकरके तष्टितहुआ फल (अर्थात् लब्धि) होगा और नीचेवाला राशि दृढहार करके तष्टितहुआ गुण होगा ॥

उपपत्ति--

भाज्य हारों का ऐसा एक बड़ा अपवर्तनाङ्क ढूंढ़ना चाहिये कि जिस करके अपवर्तित हुए वे फिर न अपवर्तित हों, और वैसे अपवर्तनाङ्क से अपवर्तित हुए वे भाज्यहार दृढसंज्ञक कहलाते हैं, जैसा-$\frac{२२१}{१९५}$। इन भाज्य भाजकों में १९५ यह छोटा है इस्से बड़ा अपवर्तनाङ्क नहीं होसक्ता तो १९५ का भाज्य २२१ में भाग देने से निःशेषता नहीं होती इस कारण भाज्य के दो खण्डकिये एक हरलब्धिके घातके समान १ × १९५ दूसरा शेषके समान २६। ये दोनों खण्ड जिससे निः शेष भागे जांयगे उसीसे भाज्यभी निःशेष होगा, अब १९५। २६ इन खण्डों में लघुखण्ड का अपवर्तन संभव है पर निःशेषता नहीं होती तो यहां परभी हर २६ लब्धि ७ के घात के समान एक खण्ड२६ × ७ = १८२। शेषके समान दूसरा खण्ड १३। इन खण्डों में भी लघुखण्ड का अपवर्तन संभवहै और १३ का भाग देनेसे १८२। १३ ये दोनों खण्ड निःशेपहोंगे क्योंकि पहिला खण्ड १८२ पहिली लब्धि ७ और हर २६ के घातके समान है वहां हर २६ दूसरे खण्ड १३ के भाग देनेसे निःशेष होताहै तो पहिला खण्ड १८२ दूसरे खण्ड १३ करके अवश्य निःशेष होगा और उनका योग भी १९५ उसी हर के भाग देनेसे निःशेष होगा अब यहां दूसरे शेष१३ से यदि पहिला शेष २६ निःशेष होगा तो १९५।२६ इन खण्डों का योग भी २२१ उसी १३ से निःशेष होगा। इस्से 'परस्परं भाजितयोर्ययोर्यः-' यह श्लोक उपपन्न हुआ॥

अथवा। भाज्य ८१ हार १५। इससे पहिली लब्धि ५ आई पहिला शेष ६ रहा, इसका हार १५ में भाग देनेसे दूसरी लब्धि २ आई दूसरा शेष ३ रहा, इसका पहिले शेष ६ में भाग देनेसे तीसरी लब्धि २ आई तीसरा शेष ० रहा, हर लब्धिका घात भाज्यराशिके समान होता है इस कारण दूसरा शेष ३ और तीसरी लब्धि २ से पहिला शेष ६ ज्ञातहुआ, इसी भांति पहिला शेष ६ और दूसरी लब्धि २ के घात १२ करके ऊन हार दूसरा शेष होता है, इसलिये दूसरे शेष करके जुड़ा हुआ पहिला शेष दूसरी लब्धि का घात हार के समान होताहै, जैसा--

पशे × दूल १ + दूशे १ = हार। ६ × २ = १२ + ३ = १५।

यहां पहिले खण्ड में पहिले शेपसे गुणी हुई दूसरी लब्धि है तहां दूसरा शेप तीसरी लब्धिका घात पहिले शेष के समान है उसे दूसरी लब्धि से गुण दिया तो हार हुआ॥

दूल × दूशे × तील १ + दूशे १ = हार।
अब उसहार को पहिली लब्धि से गुण दिया तो हुआ॥
पल × दूल × तील × दूशे १ + पल × दूशे १॥

इसमें तीसरी लब्धि और दूसरे शेष के घात के समान पहिला शेष जोड़ दिया तो भाज्यहुआ ॥

पल × दूल × तील × दूशे १ + पल × दूशे १ + तील × दूशे १ = भाज्य। इस भाज्य में तीन खण्डहैं और हार में दो खण्ड हैं, ये दोनों भाज्यहार दूसरे शेष (दूशे) करके भागे हुए निःशेष होते हैं इसकारण भाज्य ८१ हार १५ दूसरे शेष ३ से भागे हुए दृढहुए भाज्य २७। हार ५ ॥

भाज्य हार और क्षेप ये कुट्टक विधिके सहयोगी हैं, किस गुणकसे गुणित किस क्षेप से सहित वा रहित और किसहार से भक्त भाज्य निःशेष होगा तो वहां पर जो लब्धि होगी वही लब्धि और पहिला गुणक गुणक अब उन के ज्ञान के लिये यत्न करते हैं—भाज्यमें हारका भाग देने से जो लब्धि मिलती है उससे गुणाहुआ हार एक खण्ड, शेष के समान दूसरा खण्ड। जैसा—भाज्य १७३ में हार ७१ का भाग देने से २ लब्धि मिली और शेष ३१ रहा। अब यहां १४२। ३१ ये दो खण्ड कल्पनाकिये और इनका योग भाज्य है, पहिलाखण्ड १४२ हर ७१ लब्धि २ के घात १४२ के समान है इसकारण १४२ में ७१ का भागदेने से निःशेपता अवश्यहोगी और उद्दिष्ट क्षेप दूसरे खण्ड ३१ से भागाहुआ यदि निःशेष हो तो जो लब्धि है वही गुणक होगा। जैसा—ऋणक्षेप ६२ में दूसरे खण्ड ३१ का भागदेने से २ लब्धि मिली और इससे गुणाहुआ दूसराखण्ड ३१ क्षेप ६२ के समान होता है तो यही गुणकहुआ, अब २ से १४२। ३१ इन दोनों खण्डों को गुणदिया तो हुए २८४। ६२। ऋणक्षेप होने के कारण शोधन करने से दूसरे खण्डका नाशहुआ तो पहिले खण्ड २८४ में हर ७१ का भाग देने से निःशेपताहुई। और क्षेप में दूसरे खण्डका भागदेने से निःशेपता नहीं होती इस कारण गुणक के जानने के लिये दूसरायत्न करते हैं—भाज्य के दो खण्ड कल्पना किये उन में यदि दूसराखण्ड रूपके समान हो तो वह क्षेपके समान गुणक के गुणने से क्षेपकेसमान होगा तहां यदि ऋणक्षेप हो तो उसके शोधनकरने से दूसरे खण्ड का नाश होगा, जैसा—भाज्य ९ भाजक ४। यहां भाजक के दो खण्डकल्पना किये ८। १ और दूसरे खण्ड १ को क्षेप ६२ से गुणदिया ६२ हुआ इस में क्षेप ६२ को घटादिया शून्य०हुआ, और पहिले खण्ड ८ को क्षेप ६२ से गुणा ४९६ हुआ इस में हार ४ का भाग देनेसे १२४ लब्धि आई, अथवा पहिले खण्ड ८ में हार४ का भाग देने से २ लब्धि आई, इसे क्षेपतुल्य गुणक ६२ से गुणने से समानही फल हुआ। यहां भाज्य में हारका भागदेने से यदि रूप शेष न रहे तो गुणक का ज्ञान न होगा इसलिये भाज्यहारों के आपस में भागदेने से जहां रूप शेष हो वहां जो अन्य भाज्यहार होंगे उसी जये क्षेप के तुल्य गुणकहोगा परंतु ऋणक्षेपमें, जैसा—भाज्य १७३ हार ७१ क्षेप ३, यहां दृढ भाज्यहारों के परस्पर भागदेने से लब्धि और भिन्नभिन्न भाज्य हारहोते हैं ॥

| २/२ | (१) भाज्य ७२ | (२) भाज्य ७१ | (३) भाज्य ३१ | (४) भाज्य ९ |
|---|---|---|---|---|
| ३/२ | हार ७१ | हार ३१ | हार ९ | हार ४ |

यहां अन्त भाज्य के दो खण्ड ८। १ और उक्तरीति से क्षेप ३ के समान ऋणक्षेपमें गुणक हुआ। अन्त्यलब्धि २ को क्षेप ३ से गुणा तो ६ हुई और इसमें द्वितीयखण्डोत्पन्न शून्यके समान लब्धि जोड़नेसे ६ लब्धि हुई क्योंकि भाज्यके दूसरे खण्ड १ को क्षेप ३ से गुणदेनेसे ३ हुए इनमें ऋणक्षेप ३ घटा देनेसे शून्य ० शेपरहा इसमें हार ४ का भाग देनेसे शून्य ० लब्धि आती है। इससे 'मिथो भजेत्तौ दृढभाज्यहारौ यावद्विभाज्ये भवतीह रूपम्। फलान्यधोधस्तदधो निवेश्यः क्षेपस्तथान्त्ये खं–' इतना सूत्र उपपन्न हुआ। यहांपर पूर्व भाज्य हार से | २/२, ३/२, ३/० | यह वल्ली उत्पन्न होती है॥क्षेपके समान उपान्तिम कहिये अन्तके समीप वाले अङ्क ३ से उसके ऊपरवाले २ को गुणने से ६ हुए, इनमें अन्त्य ० को जोड़ने से ६ लब्धि हुई और गुणकक्षेप ३ के समान है भाज्य ९ को गुण ३ से गुण दिया २७ हुए, इनमें क्षेप ३को घटादिया तो शेप २४ रहा अब इसमें हार ४ का भाग देनेसे वही निःशेप लब्धि ६ हुई॥इसी क्षेप३ परसे तीसरे भाज्यमें गुणका विचार किया जाताहै–यहांपर भी लब्धिके समान एक खण्ड और शेपके समान दूसराखण्ड कल्पना किया, जैसा–२७। ४ इनमें पहिला खण्ड किसी एक अङ्कसे गुणित और हार ९ से भागा निःशेप होहीगा तो दूसरे खण्ड ४ से गुण का निर्णय करते हैं–भाज्य ४ हार ९ ये चौथे भाज्य हारके उलटे हैं, अब चौथे भाज्य ९ को उसके गुण ३ से गुण दिया २७ हुए इनमें क्षेप ३ को घटाकर हार ४ का भाग दिया तो ६ लब्धि मिली। अब विलोमविधि के अनुसार लब्धि ६ से हार ४ को गुणा २४ हुए, इनमें क्षेप ३ को जोड़ने से २७ हुए, बाद भाज्य ९ का भाग दिया तो वही गुण ३ मिला। इसलिये तीसरे भाज्यका दूसरा खण्ड यह गुण ४ लब्धि ६ से गुणित क्षेप ३ से युक्त और हार ९ से भागा निःशेप होताहै और लब्धि ३ आती है। तीसरे भाज्यका पहिला खण्ड २७ हार ९ से भागाहुआ शुद्ध होताहै और लब्धि ३ आती है। इसको पहिली लब्धि ६ से गुण दिया १८ हुए इसमें दूसरे खण्डसे उत्पन्न हुई ३ लब्धिको जोड़नेसे संपूर्ण लब्धि हुई २१और गुण ६ हुआ ये धनक्षेप में सिद्ध हुए इससे 'उपान्तिमेन, स्वोर्ध्वेहतेऽन्त्येन युते तदन्त्यं त्यजेत्–, उपपन्न हुआ। अर्थात् उपान्तिम अङ्क ६ से उसके ऊपरवाले अङ्क ३ को गुणनेसे १८ हुए इनमें अन्त्य ३ जोड़नेसे २१ हुए अब अन्त्यको बिगाड़डाला यह क्रिया सिद्धहुई। तीसरे भाज्य ३१ को उसके गुण ६ से गुण दिया १८६ हुए इनमें क्षेप ३ जोड़दिया १८९ हुए अबहार ९ का भाग देनेसे वही २१ लब्धिहुई। इसीभांति दूसरे भाज्य | ७१ / ३१ | के भी दो खण्ड कल्पना किये | ६२ । ९ / ३१ । ३१ | यहां दूसरे खण्ड में गुण का विचार करते हैं– पहिले सिद्ध की हुई २१ लब्धि को हार ९ से गुणदिया १८९ हुए इनमें क्षेप ३ घटाकर ६ गुणक का भागदिया

तो तीसरा भाज्य ३१ मिला, अब यहां विलोम विधिसे भाज्य को हार हार को भाज्य और क्षेपकी धनर्णता व्यत्यास (उलट पलट) मानकर लब्धिका गुणत्व और गुणका लब्धित्व सिद्धहोता है इसकारण दूसरे भाज्यके दूसरे खण्ड ९ को पूर्वसिद्ध लब्धि २१ से गुण दिया १८९ हुए इन में क्षेप ३ को घटाकर हार ३१ का भाग देनेसे निःशेषताहुई और लब्धि ६ मिली, पहिले खण्ड ६२ में हार ३१ का भाग देने से २ लब्धि आई, इस लब्धि २ को पूर्व सिद्ध लब्धि २१ से गुण दिया ४२ अब इनमें पहिले सिद्ध की हुई दूसरे खण्डसे उत्पन्न हुई लब्धि ६ को जोड़ा तो समस्त लब्धि ४८ हुई और पूर्व लब्धि २१ गुण हुआ। इस्से दूसरे भाज्य ७१ को गुण दिया १४९१ हुए, इनमें क्षेप ३ घटाकर हार ३१ का भाग दिया तो वही ४८ लब्धि मिली और शेप कुछ नहीं बचा। इसी भांति पहिले भाज्य | १४२ | ३१ | खण्ड कल्पना किये, इनमें पहिला खण्ड किसी एक | ७१ | ७१ | अङ्क से गुणा हुआ और उद्दिष्टहार से भागा अवश्य निःशेप होगा, यहां भी दूसरे खण्ड से उत्पन्न हुए गुणका विचार किया जाता है—विलोमविधि से गुण ४८ लब्धि २१ आती है, अब भाज्य का दूसरा खण्ड ३१ गुण ४८ से गुणा गया तो १४८८ हुआ इसमें क्षेप तीन जोड़कर हार ७१ का भाग दिया तो वही द्वितीय खण्डोत्पन्न लब्धि २१ हुई। पहिले खण्ड १४२ में हार ७१ का भाग देने से जो २ लब्धि आती है उसे गुण ४८ से गुण दिया और उसी में दूसरे खण्ड से उत्पन्न हुई २१ लब्धि जोड़ दी तो समस्त लब्धि हुई ११७ और गुण ४८ तो पहिलेही सिद्ध होचुका है। ये पहिले भाज्य हार विलोमविधि से निष्पन्न हुए हैं भाज्य १७३ हार ७१। और भाज्य १७३ गुण ४८ से गुणित ८३०४ हुआ, इसमें क्षेप ३ जोड़ने से ८३०७ हुआ, इसमें हार ७१ का भाग देने से वही ११७ लब्धि हुई। इस्से भी वही बात सिद्ध हुई॥ इसभांति वारवार क्रिया करने से पहिले भाज्यहार के संबन्धी लब्धि गुण होते हैं। प्रथम ऋणक्षेप में चौथे भाज्यहार से उत्पन्न लब्धि गुण हुए, फिर धनक्षेप में तीसरे भाज्यहार से उत्पन्न लब्धि गुण हुए, फिर ऋणक्षेपमें दूसरे भाज्यहार से उत्पन्न लब्धि गुण हुए, फिर धनक्षेप में पहिले भाज्यहार से उत्पन्न लब्धि गुण सिद्ध हुए, इसलिये भाज्यहारों के परस्पर भाग देने से जो लब्धि विपम हों तो लब्धि गुण ऋणक्षेप में होते हैं और लब्धि सम हों तो धनक्षेप में होते हैं॥ भाज्य को हारतुल्य गुणक से गुण कर हार का भाग देनेसे भाज्यतुल्य लब्धि आती है इस्से सिद्ध होता है कि हारतुल्य गुणककी वृद्धि होनेसे भाज्य के तुल्य लब्धि बढ़ती है और दो आदि संख्या से गुणित हारतुल्य गुणक की वृद्धि होनेसे दो आदि संख्या से गुणित भाज्य के तुल्य लब्धि बढ़ती है इस्से 'इष्टाहतस्वस्वहरेण युक्ते ते वा भवेतां बहुधा गुणाप्ती, यह वक्ष्यमाण सूत्र उपपन्न होता है। और इसीरीति से हारके समान गुणक का ह्रास होने से भाज्यके समान लब्धि में

ह्रासहोताहै इसीसे 'गुणलब्ध्योः समं ग्राह्यं धीमता तक्षणे फलम्' यह कहाहै और इसीलिये 'ऊर्ध्वो विभाज्येन दृढेन तष्टः फलं गुणः स्यादधरो हरेण' यह भी कहाहै। और यहां तष्टित करने में लब्धि गुणका फल समान ही अपेक्षित है ॥ भाज्यको गुणोनहार से गुणदो और उसमें क्षेप घटादो तो तीन खण्ड होते हैं—भा हा १ भा गु १ क्षे १ यहांपर पहिले स्थानमें हार का भाग देने से भाज्य लब्ध आताहै और दूसरे तीसरे खण्डों के योगमें हारका भाग देनेसे ऋणलब्धि मिलतीहै इसकारण गुणोनहारके समान गुणक में लब्ध्यून भाज्य के समान लब्धि योग्यहै क्षेपकी धनर्णताके एरफेर करनेसे, इसलिये धनक्षेप के लब्धि गुण अपने २ हारसे तष्ट कियेहुए ऋणक्षेप के होजाते हैं इसीभांति ऋणक्षेप के लब्धि गुण अपने अपने हार से तष्टित हुए धनक्षेप के होजाते हैं इस्से 'एवं तदैवात्र यदा समास्ताः स्युर्लब्धयश्चेद्विषमास्तदानीम् । यथागतौ लब्धिगुणौ विशोध्यौ स्वतक्षणाच्छेषमितौ तु तौ स्तः ॥' यह सूत्र उपपन्न हुआ । इसीभांति 'क्षेपजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे' यहभी उपपन्न हुआ । अव्यक्तक्रिया के अनुसार कुट्टक की वासना मत्कृत उपपत्तीन्दुशेखर नामक प्रबन्ध में सविस्तर प्रतिपादित है सो यहां ग्रन्थगौरव के भय से नहीं दिखलाई ॥

एवं तदैवात्र यदा समास्ताः<br>
स्युर्लब्धयश्चेद्विषमास्तदानीम् ॥<br>
यथागतौ लब्धिगुणौ विशोध्यौ<br>
स्वतक्षणाच्छेषमितौ तु तौ स्तः ॥ ३० ॥

अथागतफलेषु विषमेषु सत्सु विशेषमुपजातिकयाह—

एवमिति । एवं तदैव स्यात् यदा अत्र परस्परभजने ता आगता लब्धयः समाः स्युः, द्वे चतस्रः षट् अष्टावित्यादयः । यदि तु ता लब्धयो विषमाः स्युः, एका तिस्रः पञ्च सप्तेत्यादयः तदानीं कथितप्रकारेण यथा आगतौ लब्धिगुणौ तौ स्वतक्षणाच्छोध्यौ शेषतुल्यौ तौ लब्धिगुणौ स्तः । तक्ष्यते तनूक्रियतेऽनेनेति तक्षणः । 'तक्ष्णोति' इति तक्षण इति वा । स्वश्चासौ तक्षणश्च स्वतक्षणः तस्मात् । गुणो दृढहराच्छोध्यो लब्धिर्दृढहराच्छोध्येति तात्पर्यम् ॥

उक्तप्रकार से सिद्ध किये हुए लब्धि यदि विषम हों तो वहांपर क्या करना चाहिये सो कहते हैं—

उक्तप्रकार से क्रिया तभी करना चाहिये यदि आई हुई लब्धियां सम अर्थात् दो चार छ आठ आदिक हों, यदि विषम अर्थात् एक तीन पांच सात आदि हों तो आयेहुए लब्धि गुण अपने अपने तक्षणसे ( दृढ भाज्य हार से ) घटाये हुए वास्तव ( लब्धि गुण ) होंगे ॥

उपपत्ति—

इस प्रकार की वासना पहिले ही कहचुके हैं ।

भवति कुट्टविधेर्युतिभाज्ययोः
समपवर्तितयोरपि वा गुणः ।
भवति यो युतिभाजकयोः पुनः
स च भवेदपवर्तनसंगुणः ॥ ३१ ॥

अथ प्रकारान्तरेण गुणकमाह—भवतीति । युतिः क्षेपः। युतिभाज्ययोः समपवर्तितयोः सतोरपि 'मिथो भजेत्तौ दृढभाज्यहारौ—' इति यथोक्तात्कुट्टकविधेर्वा गुणः स्यात् । अपिः समुच्चये । वा प्रकारान्तरे । क्षेपभाज्ययोरपवर्तनसंभवेऽप्यपवर्तमपकृत्वापि गुणः सिध्यति । यद्वा। तयोरपवर्तितयोः सतोरपि यथोक्तकुट्टकविधिना स एव गुणः स्यादित्यर्थः । तेन गुणेन भाज्यं संगुण्य क्षेपेण संयोज्य हारेण विभज्य लब्धिरत्रावगन्तव्या । भवति य इति । पुनर्विशेषे वाक्यालंकारे वा । युतिभाजकयोस्त्वपवर्तनसंभवे सत्यपवर्तितयोः सतोर्यथोक्तकुट्टकविधिना यो गुणो भवेत् स च भवेत, परमपवर्तनसंगुणः सन् । चकारादनपवर्तितयोरपि गुणसिद्धिर्भवति । यद्वा अपिवाशब्दसामर्थ्यादध्याहारेण योजना । सा यथा—युतिभाज्ययोः समपवर्तितयोर्या लब्धिर्भवति, अपि वा युतिभाजकयोस्त्वपवर्तितयोर्यो गुणो भवति, सा लब्धिः स च गुणोऽपवर्तनसंगुणः सन् भवेत् । लिङ्गविपरिणामेन लब्धिरपवर्तनसंगुणा सती भवेदिति योज्यम् । युतिभाज्ययोः समपवर्तितयोर्लब्धिरपवर्तनाङ्केन गुण्या, गुणस्तु यथा-

गत एव । युतिभाजकयोस्त्वपवर्तितयोर्गुणोऽपवर्तनाङ्केन गुण्यः लब्धिर्यथागता वेत्यर्थः । अत्र 'यद्वा' इत्यादिना व्याख्यातोर्थो युक्ततरोस्ति परं न तथायं शब्दलभ्यः । आचार्याणामपि नायमर्थोऽभिप्रेतः किंतु प्रथम एव । यतस्ते 'शतं हतं येन युतं नवत्या–'इत्याद्युदाहरणे वक्ष्यन्ति 'अत्र लब्धिर्न ग्राह्या गुणघ्नभाज्ये क्षेपयुते हरभक्ते लब्धिश्च' इति । द्रुतविलम्बितवृत्तमेतत् ॥

प्रकारान्तरसे गुणक लानेका विधि–

अपवर्तन दिये हुए भाज्य क्षेपों परसे 'मिथो भजेत्तौ दृढभाज्यहारौ–' इस कहे हुए कुट्टकविधि के अनुसार गुण सिद्ध होताहै और लब्धि अपवर्तनाङ्क से गुणी हुई वास्तव (ठीक) होती है । अथवा, अपवर्तन के संभव होनेपर भी अपवर्तन न देकर भाज्यक्षेपों पर से गुण आताहै । अथवा, भाज्यक्षेपों में अपवर्तन देकर भी उक्त कुट्टकविधिसे गुणआताहै परंतु लब्धि गुणगुणित क्षेपयुक्त भाज्य में हार का भागदेनेसे मिलेगी । अपवर्तन संभव होते हार और क्षेपमें अपवर्तन देकर उक्तविधि से गुण सिद्ध करो वह अपवर्ताङ्क से गुणाहुआ वास्तवहोगा और लब्धि जैसी आती है वही वास्तवहै ॥

उपपत्ति–

गुणगुणित क्षेपयुत भाज्य और हारलब्धि का घात ये दो तुल्य होते हैं– गु० भा १ क्षे १=हा० ल १ । ये दोनों पक्ष किसी इष्टाङ्क से गुणे हुए भी समान हैं इ० गु० भा १ इ० क्षे १=इ० हा० ल १ । यहांपर यदि इष्टगुणित भाज्य भाज्य, इष्ट गुणित क्षेप क्षेप, और केवल हार हार कल्पना करें तो लब्धि को इष्ट गुणित होना उचित है क्योंकि दूसरे पक्ष में 'इ० हा० ल १' हार का भाग देने से इष्टगुणित लब्धि फल आता है इ० ल १ । गुणगुणित कल्पित क्षेपयुक्त कल्पितभाज्य पहिले पक्ष का स्वरूप है और वही हार से भागा हुआ लब्धि होता है, पक्षों के साम्य होनेके कारण वह लब्धि भी इष्ट गुणित हुई । अथवा, पहिले पक्ष में इष्टगुणित गुण गुण, केवल भाज्य भाज्य, इष्टगुणित क्षेप क्षेप, और इष्ट गुणित हार हार कल्पना किया तो पहिले के तुल्यही लब्धि आई क्योंकि दूसरे पक्ष 'इ० हा० ल १' में इष्टगुणित कल्पित हार 'इ० हा० १' का भाग देने से लब्धिही फल मिलती है, यहां पहिलेपक्ष में इष्टगुणित गुण को गुण कल्पना करने से '–स च भवेदपवर्तनसंगुणः' यह सूत्र उपपन्न हुआ ॥ अपवर्तनाङ्कको इष्ट कल्पना करने से उदाहरण दिखलाते हैं—भाज्य २२१ । हार १९५ । क्षेप ६५ । यहां उक्तप्रकार से लब्धि ६ गुण ५ आया । अथवा भाज्य क्षेप में तेरह का अपवर्तन दिया तो भाज्य १० हार १९५ । क्षेप ५ हुआ । यहां उक्त प्रकार से ७ लब्धि और ८० गुण

आया, अब भाज्य १७ गुण ८० से गुणा १३६० इसमें क्षेप ५ जोड़ा १३६५ उसमें हार १९५ का भाग देने से ७ लब्धि आई इसे अपवर्तनाङ्क १३ से गुणा ९१ हुए। प्रकृत भाज्य २२१ में ९१ लब्धिहै, अब भाज्य २२१ गुण ८० से गुणदेने से १७६८० हुआ उसमें क्षेप ६५ जोड़नेसे १७७४५ हुआ उसमें हार १९५ का भागदेनेसे ९१ लब्धि आई, इन लब्धि गुण को ९१।८० अपने अपने दृढ भाज्य हारसे १७।१५ तष्टित किये तो पहिले के तुल्य लब्धि गुण हुए ६।५। यहां कुट्टकीय भाज्य १७ अपवर्ताङ्क १३ से गुणा भाज्य है २२१ इसलिये लब्धि को भी अपवर्ताङ्क से गुण देते हैं॥ अथवा हार क्षेप हीमें तेरह का अपवर्तन दिया तो भाज्य २२१। हार १५। क्षेप ५ हुआ, यहां भी उक्तप्रकार से लब्धि ७४ गुण ५ आया, अब भाज्य २२१ को गुण ५ से गुणा ११०५ हुए इनमें क्षेप ५ जोड़ा १११० हुए इनमें हर १५ का भागदिया ७४ लब्धि आई। और गुण ५ अपवर्तनाङ्क १३ से गुणाहुआ वास्तव हुआ ६५ इसभांति लब्धि गुण ७४।६५ हुए, इन्हें अपने अपने तक्षण १७।१५ से शोधित किया तो वही लब्धि गुण हुए ६।५। यहां कुट्टकीय हार १५ अपवर्ताङ्क १३ से गुणाहुआ वास्तवहार १९५ हुआ इसीलिये गुणभी अपवर्ताङ्कसे गुणा जाताहै॥ अथवा भाज्य क्षेपमें तेरहका अपवर्तन देने से भाज्य १७। हार १९५। क्षेप ५ हुआ, फिर हारक्षेपमें पांचका अपवर्तन देनेसे भाज्य १७ हार ३९। क्षेप १ हुआ, यहां उक्तविधि से ७।१६ लब्धि गुण मिले, अब भाज्य १७ को गुण १६ से गुणा २७२ हुए इनमें क्षेप १ जोड़दिया २७३ हुए इनमें हार ३९ का भागदिया तो ७ लब्धिहुई, यहां लब्धि ७ गुण १६ को क्रमसे १३।५ अपवर्ताङ्क से गुणदिया ९१।८० हुए इन्हें अपने अपने तक्षण १७।१५ से तष्टित किये तो प्रकृत भाज्य हारसंबन्धी लब्धि गुण हुए ६।५॥ अब भा १७। हा १५। क्षे ५। दृढ भाज्य हार और क्षेप हैं यहां हार क्षेप में पांचका अपवर्तन देनेसे भाज्य १७ हार ३ और क्षेप १ हुआ। यहांपर भी उक्त प्रकार से ६।१ लब्धि गुण हुए, अब भाज्य १७को गुण १ से गुणा १७ हुए इनमें क्षेप १ जोड़ दिया १८ हुए इनमें हार ३ का भाग दिया तो ६ लब्धि हुई, यहां गुण १ को अपवर्ताङ्क ५ से गुण दिया ५ हुए इसभांति ६। ५ ये दृढ भाज्य हारोपन्न लब्धि गुण हुए॥

योगजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे।
धनभाज्योद्भवे तद्वद्भवेतामृणभाज्यजे॥ ३२॥

अथ ऋणक्षेपे ऋणभाज्ये वा सति विशेषमनुष्टुभाह—

योगजे इति। योगजे धनक्षेपजे ये गुणाप्ती ते स्वतक्षणाच्छुद्धे वियोगजे भवतः। गुणो दृढहाराच्छुद्धः सन् लब्धिर्दृढभाज्याच्छुद्धा।

सती ऋणक्षेपे भवतीत्यर्थः । एवं धनभाज्योद्भवे गुणाप्ती तद्व-
त्स्वतक्षणाच्छुद्धे ऋणभाज्यजे भवतः । अत्रोत्तरार्धे—

'ऋणभाज्योद्भवे तद्वद्भवेतामृणभाज्यके'

इत्यपि पाठः क्वचिल्लभ्यते । तस्यायमर्थः—योगजे गुणाप्ती स्वतक्षणाच्छुद्धे वियोगजे भवतः । तद्वदृणभाज्योद्भवे भवतः । तद्वदृणभाजकेऽपि गुणाप्ती भवतः क्षेपभाज्यहाराणामन्यतमे ऋणे सति पूर्वसिद्धे गुणाप्ती स्वतक्षणाच्छोध्ये इत्यर्थः । एवं द्वौ चेदृणगतौ तदा पुनरपि स्वतक्षणाच्छोध्ये इत्यर्थः । एवं त्रयाणामप्यृणत्वे त्रिवारं स्वतक्षणाच्छोध्ये इत्यर्थः । अयमपपाठः न हि भाजकस्य धनत्वे ऋणत्वे वास्ति कश्चिदङ्कतो विशेषो येनोपायान्तरमारभ्येत किंतु धनर्णता व्यत्यासमात्रं लब्धेः भाज्यस्य तु धनत्वे ऋणत्वे च क्षेपयोगे च क्रियमाणेऽस्त्यङ्कतोपि विशेष इति तस्यर्णत्वे उपायान्तरमारम्भणीयमेव । आचार्यस्याप्यनभिमत एवायं पाठः यतः 'अष्टादशगुणाः केन दशाढ्या वा दशोनिताः । शुद्धं भागं प्रयच्छन्ति क्षयगैकादशोद्धृताः' इत्युदाहृत्य भाज्यः १८ । हारः ११ । क्षेपः १० अत्र भाजकस्य धनत्वे कृते गुणलब्धी ८।१४ । ऋणेऽपि भाजके एते एव, किंतु लब्धिः ऋणगता कल्प्या भाजकस्य ऋणरूपत्वात् ८ । १४ इति वक्ष्यति । अस्मिन्पाठेर्थाशुद्धिरप्युदाहरणविवरणावसरे प्रतिपादयिष्यते । वस्तुतस्तूत्तरार्द्धमनपेक्षितमेव । पूर्वार्धेनैव गतार्थत्वात् । तथा हि— योगजे गुणाप्ती वियोगजे भवत इति तदर्थः । तत्र भाज्यक्षेपयोर्धनत्वे ऋणत्वे वा ये गुणाप्ती ते योगजे । यत उभयोर्धनऋणत्वे वा 'योगे युतिः स्यात्क्षययोः स्वयोर्वा—' इति नास्ति कश्चिदङ्कतो विशेषः । यदा पुनर्भाज्यक्षेपयोरन्यतरस्य ऋणत्वं तदा 'धनर्णयोरन्तरमेव योगः' इत्युक्तत्वादन्तरे क्रियमाणे भवत्यङ्कतोपि विशेष इति तदर्थमुपायान्तरमारम्भणीयम् । तदर्थमुक्तम् 'स्वतक्षणाच्छुद्धे वियोगजे भवत इति' । अस्मात्पूर्वार्धार्थादतिरिक्तः

को वार्थ उत्तरार्धेन प्रतिपाद्यते येन तदपेक्षितं स्यात् अयमर्थः 'यद्गुणाक्षयगषष्टिरन्विता—' इत्युदाहरणे "धनभाज्योद्भवे तद्वदृवेता मृणभाज्यजे, इति मन्दावबोधार्थं मयोक्तम्। अन्यथा 'योगजे तक्षणाच्छुद्धे—' इत्यादिनैव तत्सिद्धेः" इति वदताचार्येणैव प्रतिपादयिष्यते। तस्मात्सिद्धान्तान्तर्गतबीजमूलसूत्रे पूर्वार्धमात्रं द्वितीयमर्धं तु तद्विवरणरूपेऽस्मिन्बीजगणिते बालावबोधार्थमुक्तमतस्तत्पृथग्गणनां नार्हति। अतः कुट्टकसूत्रेष्वनुष्टुभां चतुष्टयमेव न सार्धं तत्, अनुष्टुप्त्रयमेका च गाथेति कल्पनस्यान्याय्यत्वादित्यलं विस्तरेण॥

ऋणक्षेप अथवा ऋणभाज्य में विशेष—

धनक्षेपसंबन्धी लब्धि गुण अपने अपने तक्षण में घटाये हुए ऋणक्षेप के होते हैं अर्थात् दृढहारमें शोधित हुआ गुण गुण, दृढभाज्य में शोधित हुई लब्धि लब्धि होती है। इसीभांति धनक्षेपसंबन्धी लब्धि गुण अपने २ तक्षण में शोधित हुए ऋणभाज्य के होते हैं॥

## गुणलब्ध्योः समं ग्राह्यं धीमता तक्षणे फलम्॥

अथ क्षेपे हारमात्राद्भाज्यमात्राद्वा हारभाज्याभ्यां वा न्यूने क्वचिद्विशेषमुत्तरार्धेनाह—गुणलब्ध्योरिति। 'ऊर्ध्वो विभाज्येन दृढेन तष्टः फलं गुणः स्यादधरो हरेण' इत्यत्र गुणलब्धिसंबन्धिनि तक्षणे क्रियमाणे सत्युभयत्र तक्षणस्य फलं तुल्यमेव ग्राह्यं केन धीमता बुद्धिमता। हेतुगर्भमिदम्। तथा हि—उभयत्र तक्षणे क्रियमाणे यत्राल्पं तक्षणफलं लभ्यते तत्तुल्यमेवान्यत्रापि ग्राह्यं न त्वधिकं प्राप्तमपि। अत्र पुस्तकेषु 'गुणलब्ध्योः समं ग्राह्यं—' इत्यादिश्लोकार्धस्य 'योगजे तक्षणाच्छुद्धे—' इत्यतः प्राक् पाठो दृश्यते स तु लेखकदोषज इति प्रतिभाति पुस्तकपाठक्रमस्वीकारे तु 'गुणलब्ध्योः समं ग्राह्यं' इत्यत्र प्रकारान्तरार्थं प्रवृत्तस्य 'हरतष्टे धनक्षेपे—' इत्येतस्य सूत्रस्य व्यवधानं स्यात्। उदाहरणक्रमविरोधश्च स्यात्। लीलावतीपुस्तकेषु पुनरस्मल्लिखितक्रम एवास्ति, युक्तश्चायमिति प्रतिभाति॥

अन्य विशेष—

'ऊर्ध्वो विभाज्येन दृढेन तष्टः फलं गुणः स्यादधरो हरेण—' इसप्रकारके अनुसार अपने अपने तक्षण से जो लब्धि गुण तष्टित कियेजाते हैं वहां पर समानफल लेनाचाहिये अर्थात् दोनों स्थान में जहां अल्प तक्षण फल मिले उसीके तुल्य दूसरे स्थानमें भी तक्षण फल लेना चाहिये किंतु न्यूनाधिक नहीं॥

उपपत्ति—

गुणगुणित भाज्य एक खण्ड, क्षेप दूसरा खण्ड, इन दोनों में से एक के ऋण होने से धन और ऋण का अन्तर होता है, और ऋण भाज्य क्षेप में योगविधि होताहै क्योंकि ऋण ऋण का योग होता है ये सब बात सुगमहैं॥

हरतष्टे धनक्षेपे गुणलब्धी तु पूर्ववत् ३३
क्षेपतक्षणलाभाढ्या लब्धिः शुद्धौ तु वर्जिता।

अथात्र गुणलब्ध्योस्तक्षणे फलयोरतुल्यता यथा न भवति तथा प्रकारान्तरमनुष्टुभाह—हरतष्ट इति। यत्र क्षेपो हारादधिकस्तत्र हारेण क्षेपस्तक्ष्यः तष्टक्षेपमेव प्रकल्प्य पूर्ववद्गुणलब्धी साध्ये। तत्र यत्र गुणो यथागत एव,लब्धिस्तु क्षेपतक्षणलाभाढ्या कार्या क्षेपस्य तक्षणमवशेषणं तत्र यो लाभः फलं तेन आढ्या युक्ता एवं धनक्षेपे, शुद्धौ ऋणक्षेपे तु हरतष्टे कृते सति पूर्ववत् 'योगजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे' इत्युक्तप्रकारेण ये गुणाप्ती स्तस्तत्र लब्धिः क्षेपतक्षणलाभेन वर्जिता कार्या यदा तुभा ज्यादन्यूने हारान्न्यूने क्षेपेगुणलब्ध्योस्तक्षणेक्वचित्फलवैलक्षण्यं स्यात्तत्रैतस्य सूत्रस्याप्रवृत्तेः 'गुणलब्ध्योः समंग्राह्यं—' इत्यादिनैव तक्षणफलं ग्राह्यमिति। यथा - भाज्यः ३। हारः ४। क्षेपः ३। अत्रोक्तवज्जातं राशिद्वयम् | ल ३ गु ३ | अत्र गुणतक्षणे किंचिन्न लभ्यते

लब्धितक्षणे त्वेकः प्राप्यते स न ग्राह्यः। एवं क्षेपस्यहरेणतक्षणेऽपि भाज्यादन्यूनतया यदि क्वचित्फलवैषम्यं स्यात्तत्रापि 'गुणलब्ध्योः समं ग्राह्यं—' इत्यादिनैव तक्षणफलं ग्राह्यमिति। यथा भाज्यः ३। हारः ४। क्षेपः ७। एवंविधस्थले फलयोर्यथा वैषम्यं न भवति तथा प्रकारान्तरं न दृश्यते॥

दूसरा विशेष—

जिस स्थान में क्षेप हार से अधिक हो वहां हार से तष्टित किये हुए क्षेपको क्षेप कल्पना करके उक्तरीति से गुण लब्धि सिद्ध करो, तहां गुण जो आया है वही होगा और लब्धि, क्षेपके तष्टित करने में जो फल आया है उस करके जुड़ी हुई वास्तव होगी इस भांति धनक्षेप में जानो। ऋणक्षेप में तो क्षेपको हर से तष्टित करने के बाद 'योगजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे, इस रीति के अनुसार गुण लब्धि सिद्ध करो तहां गुण तो यही वास्तव होगा पर लब्धि, क्षेपके तष्टित करने से जो फल आया है उसे ऊन हुई वास्तव होगी। जहां कहीं क्षेप भाज्य से अन्यून (कमनहीं) और हार से न्यून हो वहां गुण लब्धिके तष्टित करने में कहीं फलका वैषम्य (कमज्यादापन) होगा तो इस विधिकी प्रवृत्ति न होने से' गुणलब्ध्योः समं ग्राह्यं धीमता तक्षणे फलम्, इस सूत्र के अनुसार फल लेना होगा॥

**अथवा भागहारेण तष्टयोः क्षेपभाज्ययोः॥ ३४॥**
**गुणः प्राग्वत्ततो लब्धिर्भाज्याद्धतयुतोद्धृतात्।**

अथ भाज्येऽपि हरादधिकेऽनुष्टुभा विशेषमाह—अथवेति। यत्र भाज्यक्षेपौ हरादधिकौ तत्र पूर्ववद्वा क्षेपमात्रतक्षणेन वा गुणाप्ती साध्ये। अथवा भाज्यक्षेपौ द्वावपि हरेण तक्ष्यौ तष्टयोः क्षेपभाज्ययोः प्राग्वदेव गुणाप्ती साध्ये तत्र गुण एव ग्राह्यो न लब्धिः। कथं तर्हि लब्धिरवगन्तव्येति तदाह— भाज्याद्धतयुतोद्धृतादिति। हतश्चासौ युतश्च हतयुतः, हतयुतश्चासावुद्धृतश्चेति हतयुतोद्धृतस्तस्मात्। गुणेन गुणितात्क्षेपेण युताद्भाजकेन भक्तादुद्दिष्टाद्भाज्याद्या लब्धिर्भवति सा ज्ञेयेत्यर्थः। अस्त्यत्र लब्धिज्ञाने प्रकारान्तरमपि। तथा हि-भाज्यतक्षणलाभो गुणेन गुणनीयः पश्चात्क्षेपतक्षणलाभेन संस्कार्यः, संस्कृतेन तेन गणितागता लब्धिः संस्कार्या सा लब्धिर्भवतीति गौरवादाचार्यैरिदं नोक्तम्॥

दूसरा विशेष—

जहांपर भाज्य क्षेप, हार से अधिक हों वहां पूर्वप्रकार से अथवा क्षेपमात्र को तष्टित कर गुण लब्धि सिद्ध करो। अथवा भाज्य क्षेपों को हार से तष्टित करो और उन तष्ट भाज्य क्षेप पर से कही हुई रीति के अनुसार गुण लब्धि ल्याओ यहां वह गुण तो वास्तव होगा परंतु लब्धि वास्तव न होगी,

किंतु गुणगुणित क्षेपयुक्त भाज्य में हारका भाग देनेसे जो लब्धि मिलेगी वह वास्तव होगी ॥

क्षेपाभावोऽथ वा यत्र क्षेपः शुध्येद्धरोद्धृतः ॥ ३५ ॥
ज्ञेयः शून्यं गुणस्तत्र क्षेपो हारहृतः फलम् ॥

अथ क्षेपाभाव एकादिगुणहरसमे वा क्षेपेऽनुष्टुभा विशेषमाह—क्षेपाभाव इति । यत्रोदाहरणे क्षेपस्य अभावो राहित्यं स्यात् अथवा क्षेपो हरेण उद्धृतो भक्तः शुध्येत् निःशेषतां गच्छेत् तत्र शून्यं गुणः हारहृतः क्षेपः फलं लब्धिरित्यर्थः ॥

दूसरा विशेष—

जिस उदाहरण में क्षेप न हो अथवा हारके भागदेने से निःशेष होता हो वहां शून्य गुण होगा और क्षेप में हार का भागदेने से जो फल मिलेगा वही लब्धि होगी ॥

इष्टाहतस्वस्वहरेण युक्ते
ते वा भवेतां बहुधा गुणाप्ती

अथ गुणलब्ध्योरनेकत्वमुपजातिकापूर्वार्धेनाह—इष्टेति स्वस्य स्वस्य हरः स्वस्वहरः, इष्टेन आहतः इष्टाहतः, इष्टाहत श्चासौ स्वस्वहरश्च इष्टाहतस्वस्वहरः, तेन इष्टाहतस्वस्वहरेण युक्ते गुणाप्ती गुणलब्धी बहुधा भवेताम् । इष्टेन गुणितं हरं गुणे प्रक्षिपेत्, तेनैवेष्टेन गुणितं भाज्यं लब्धौ च प्रक्षिपेत् । एवमेते गुणाप्ती इष्टकल्पनवशादनेकधा भवत इत्यर्थः ॥

एक गुणलब्धि परसे अनेक गुणलब्धि लाने का प्रकार—

उक्त प्रकार से सिद्ध किये हुए जो लब्धि गुण उन्हें इष्टसे गुणे हुए अपने अपने हर से युक्त करो तो अनेक लब्धि गुण होंगे अर्थात् इष्ट गुणित हरको गुण में जोड़दो और उसी इष्ट से गुणे हुए भाज्य को लब्धि में जोड़दो यों इष्ट कल्पना करने से एकही गुणलब्धि परसे अनेक गुणलब्धि सिद्धहोंगे ॥

---

(१) अस्यैव पद्यस्योत्तरार्धम् 'क्षेपं विशुद्धिं परिकल्प रूपं पृथक् पृथग्ये गुणकारलब्धी' इत्यर्थं वर्तते. अत एवास्मद्गुरुचरणाः स्वसंशोधितलीलावतीपुस्तके तथैव श्लोकाङ्कन्यासमकार्षुः यद्यपि तत्र 'क्षेपे तु रूपे यदि वा विशुद्धौ स्यातां क्रमाद्ये' इयान् पाठभेदो दृश्यते तथापि न दोषः श्लोकसंख्यागणनाय कर्तव्यः पाठभेदस्यानावश्यकत्वात्तादृशश्लोकान्तरानुपलम्भाच्च अत्र केचिदर्वाञ्चोऽस्योत्तरार्धमभिमन्यन्ते तन्मतेऽपृच्छ्य प्राक् पूर्वनर्थमन्वेषणीयम् ॥

उपपत्ति—

गुणगुणित क्षेपयुक्त भाज्य और हारलब्धि का घात ये आपस में समान होते हैं इसलिये दो पक्ष सिद्ध हुए—

गु० भा१ क्षे १ = हा० ल १

अब इन में इष्टगुणित हार ( इ० हा १ ) को जोड़ दिया तो भी समान ही रहे गु० भा १ क्षे १ इ० हा १ = हा० ल १ इ० हा १

यहां दूसरे पक्ष में हारका भाग देने से इष्टाङ्क और लब्धि की योगरूप लब्धि आती है। इस्से 'क्षेपतक्षणलाभाढ्या लब्धिः—' यह उपपन्न हुआ क्योंकि क्षेप तष्टित करने से जो फल ( लब्धि ) आताहै उसी को इष्ट अङ्क कल्पना कियाहै ॥

इसी भांति पहिले पक्ष में दूसरे खण्डको हर से तष्टित किये हुए धनक्षेप के तुल्य कल्पना किया और तीसरा खण्ड तो इष्ट और हार का घातहै वह क्षेपको तष्टित करने से जो फल मिला है उससे गुणाहुआ हार है इसलिये उन दोनों के योगको ( क्षे १ इ० हा १ ) मुख्य क्षेप कल्पना किया, अब यहां पहिला खण्ड गुणगुणित भाज्य का स्वरूप है गु० भा १ तो इसमें मुख्य क्षेप जोड़ कर हार का भाग देने से मुख्य लब्धि मिलनी चाहिये क्योंकि दूसरे पक्ष में हार का भाग देने से इष्ट और लब्धि की योगरूप ( इ १ ल १ ) मुख्य लब्धि आती है। इस्से धनक्षेप में जो कहआये हैं वह उपपन्न हुआ ॥

इसीभांति ऋणक्षेप में पहिले पक्षों को इष्ट और हार के घात से हीन किया तो भी पक्ष समानही रहे—

गु० भा १ क्षे १ इ० हा १ = हा० ल १ इ० हा १

अब यहां पर भी पहिले के तुल्य क्रियाकरनेसे इष्टोन लब्धिरूप लब्धि आती है। इसलिये 'शुद्धौ तु वर्जिता—,यह उपपन्न हुआ

अथवा क्षेपके दो खण्ड किये—एकआदि से गुणित हारके समान एक खण्ड, शेप के समान दूसरा खण्ड, यहां शेपके समान क्षेपमानकर जो गुण सिद्धकिया उसकरके गुणित शेपमित क्षेप करके युक्त भाज्य में हारका भाग देने से शेप नहीं रहैगा किंतु क्षेपका पहिला खण्ड एक आदि गुणित हार के समान होनेसे इसक्षेपखण्ड में हार का भाग देने से क्षेपके तक्षण फल के समान लब्धि आ-ती है उसे पहिली लब्धिमें जोड़देना चाहिये इस्से भी वही बात सिद्धहुई ॥

इसी भांति भाज्य क्षेप भी हार से तष्टित किये जाते हैं और वहांपर भी उक्त रीतिके अनुसार उपपत्ति जाननी चाहिये। जैसे क्षेपके दो खण्ड किये हैं वे से भाज्यके भी दो खण्ड किये गयेहैं। यहां भाज्य को तष्टित करनेसे जो लब्धि आवे है उसे गुणसे गुणदो और क्षेपतक्षण फलकरके संस्कृत ( युक्त हीन ) करो अनन्तर उसका गणितागत लब्धि में संस्कार ( ऋण धन ) करो तो वह मुख्य लब्धि होगी परंतु यह बात आचार्य ने गौरव भयसे नहीं कही किंतु लाघव से 'भाज्याद्धतगुणोत्कृतात्' यही कहा ॥

जिस स्थान में क्षेप नहीं हो वहां गुण शून्य होताहै, उस शून्य गुण से भाज्य को गुणने से गुणनफल शून्य होताहै और उसमें हारका भाग देने से लब्धि भी शून्यही आती है यह बात अति सुगम है। इसभांति हारका भाग देनेसे यदि क्षेप में निःशेपता होवे तो भी गुण शून्यही होगा और उससे भाज्यको गुणने से गुणनफल शून्य होताहै और वहां क्षेप के जोड़ने से हार का भाग देने से 'क्षेपो हारहृतः फलम्' यही संपन्न होताहै। इस सूत्र करके और 'मिथो भजेत्तौ दृढभाज्यहारौ—' इस सूत्र करके गुण लब्धि के ज्ञान में नवाङ्कुरकारने लाघव दिखलाया है—जैसा—भाज्य १००। हार ६३। क्षेप ३७। यहां उक्त प्रकार के अनुसार वल्ली निष्पन्न हुई। १
१
१
२
१
३७
०

इससे दो राशि हुए ९९। ६२॥ अथवा भाज्य १०० में हार ६३ का भाग देनेसे १ लब्धि आई और ३७ शेष रहा, अब इसका फिर भाज्य रूप हार ६३ में भाग देना चाहिये तहां हार ३७ से क्षेप ३७ निःशेपहुआ और लब्धि १ मिली यहां पहिले की लब्धिही लब्धि है और दूसरी लब्धि क्षेप १ है उसके नीचे शून्य इसप्रकार वल्ली हुई। १
१
०

बाद लब्धि गुण हुए १। १ वल्ली विषम है इस लिये अपने अपने तक्षण में घटादिया तो हुए ९९। ६२॥

अथवा भाज्य १००। हार ६३। क्षेप २६। यहां उक्त विधि से वल्ली निष्पन्न हुई १
१
१
२
२
१
२६
०

इससे लब्धि गुण उत्पन्न हुए २। १॥ अथवा भाज्य १०० में हार ६३ का भाग देनेसे पहिली लब्धि १ आई, शेष ३७ रहा, इसका हार ६३ में भाग देनेसे दूसरी लब्धि १ आई, शेष २६ रहा, इस का क्षेप २६ में भाग देनेसे

निःशेषता हुई फल १ आया, इससे वल्ली निष्पन्न हुई १
१
१
०

उक्त प्रकार से लब्धि गुण हुए २ । १ ॥ अथवा भाज्य १०० । हार ६२ । क्षेप २३ । उक्त विधि से वल्ली सिद्ध हुई १
१
१
२
२
१
३३
०

बाद लब्धि गुण हुए ९१ । ५७ ॥ यहां भाज्य १०० में हार ६२ का भाग देनेसे पहिली लब्धि १ मिली, शेप ३७ का हार ६२ में भाग देने से दूसरी लब्धि १ आई, फिर शेप २६ का पहिले शेप ३७ में भाग देने से तीसरी लब्धि १ आई शेष ११ रहा, इसका क्षेप ३३ में भाग देने से लब्धि ३ आई इससे वल्ली उत्पन्न हुई १
१
१
३
०

अनन्तर उक्त प्रकार के अनुसार लब्धि गुण हुए ९ । ६ वल्ली के विषम होनेके कारण इन्हें अपने अपने तक्षणमें शुद्ध किये तो हुए ९१ । ५७ येही पहिले लब्धि गुण आयेथे ॥

उदाहरणम्—

एकविंशतियुतं शतद्वयं
यद्गुणं गणक पञ्चषष्टियुक् ।
पञ्चवर्जितशतद्वयोद्धृतं
शुद्धिमेति गुणकं वदाशु तम् ॥ २२ ॥

अथोक्तसूत्राणां क्रमेणोदाहरणानि शिष्यबोधार्थं निरूपयति—

तेषु यत्र त्रयाणामप्यपवर्तनं संभवति लब्धयश्च समास्तादृश-मुदाहरणं रथोद्धतयाह— एकेति । उत्तानाशयोऽयम् ।

उदाहरण——
ऐसा कौन गुणक है जिस्से दोसौ इकीसको गुण दो और पैंसठ जोड़दो बाद एकसौ पंचानवे का भाग दो तो वह निःशेष होवे ॥

न्यासः । भाज्यः२२१ । हारः१९५ । क्षेपः६५ ।

अत्र परस्परं भाजितयोर्भाज्यभाजकयोः शेषम् १३। अनेन भाज्यहारक्षेपा अपवर्तिता जाता दृढाः

भा० १७ । क्षे० ५ ।
हा० १५ ।

अनयोर्दृढभाज्यहारयोः परस्परं भक्तयोर्लब्धमधो-धस्तदधः क्षेपस्तदधः शून्यं निवेश्यमिति न्यस्ते जाता वल्ली

१
७
५
०

'— उपान्तिमेन स्वोर्ध्वे हते—' इत्यादिकरणेन जातं राशिद्वयम् $\frac{४०}{३५}$ एतौ दृढभाज्यहाराभ्या $\frac{१७}{१५}$ माभ्यां तष्टौ शेषमितौ लब्धिगुणौ $\frac{६}{५}$ । अनयोः स्वतक्षणमिष्टगुणंक्षेप इत्यथवा लब्धिगुणौ $\frac{२३}{२५}$ वा $\frac{४०}{३४}$ इत्यादि ॥

न्यास । भाज्य २२१ । हार १९५ । क्षेप ६५ यहां अपवर्तनाङ्क जानने के लिये भाज्य २२१ में हार १९५ का भागदिया २६ शेष रहा, इसका हार १९५ में भागदिया १३ शेष रहा, इसका भी पहिले शेष १३ में भाग देनेसे शेष कुछ नहीं बचता इसलिये परस्पर भाग देनेसे १३ अन्त्य शेष रहा और यही उनका अपवर्तनाङ्क है इसलिये इस करके वे निःशेष भागेजांयगे, अब उससे अपवर्तित हुए भाज्य हार क्षेप दृढ हुए भा १७ । क्षे ५ ।
हा १५ ।

अब इन दृढ भाज्य हारों के आपस में भाग देने से जो लब्धि मिलीं उन्हें एक के नीचे एक इस क्रम से स्थापन किया और उनके नीचे क्षेप, क्षेप के नीचे शून्य रक्खा तो वल्ली निष्पन्न हुई १
७
५
०

यहां उपान्तिम ५ से उसके ऊपरवाले ७ को गुणा ३५ हुए इनमें अन्त्य० को जोड़कर विगाड़ डाला तो $\frac{३५}{५}$ ऐसा स्वरूपहुआ।

फिर उपान्तिम ३५ से उस के ऊपरवाले १ को गुणा ३५ हुए इन में अन्त्य ५ को जोड़कर उसे विगाड़ डाला तो दो राशि हुए $\frac{४०}{३५}$। अब इन्हें दृढ भाज्य हार $\frac{१७}{१५}$ से तष्टित किये तो शेपरहा $\frac{६}{५}$ ये क्रमसे लब्धि गुणहुए। अब यहां 'इष्टाहतस्वस्वहरेण युक्ते–' इस सूत्रके अनुसार १ इष्ट कल्पना किया और इससे अपने अपने हर १७। १५ को गुण दिया तो १७। १५ हुए, इन्हें लब्धि गुणमें जोड़नेसे $\frac{२३}{२०}$ ये दूसरे लब्धि गुणहुए। इसीभांति२ इष्ट मानने से $\frac{४०}{३५}$। ३ इष्ट मानने से $\frac{५७}{५०}$। इस प्रकार इष्ट कल्पना करनेसे अनेक लब्धि गुण आवेंगे।

आलाप–प्रथम गुण ५से भाज्य २२१ को गुणा ११०५ हुए इनमें क्षेप ६५ जोड़ा ११७० हुए इनमें हार १९५ का भाग देनेसे निःशेपता होती है, यही प्रश्नथा। इसभांति हर एक गुण परसे आलाप मिलाकर प्रतीति उत्पन्न करनी चाहिये॥

## उदाहरणम्–

> शतं हतं येन युतं नवत्या
> विवर्जितं वा विहृतं त्रिषष्ट्या।
> निरग्रकं स्याद्वद मे गुणं तं
> स्पष्टं पटीयान् यदि कुट्टकेऽसि॥ २३॥

अथ त्रयाणामपवर्ते'भवति कुट्टविधेः–' इति सूत्रस्य स्वतन्त्रमुदाहरणं 'योगजे तक्षणाच्छुद्धे–' इत्यस्य च क्रमेणोदाहरणद्वयमुपजातिकयाह–शतमिति। येन गुणेन हतं नवत्या युतं त्रिषष्ट्या विहृतं शतं निरग्रकं स्यात्तं गुणं वद॥ अथ वियोगउदाहरणम्–विवर्जितं वेति। शतं येन हतं नवत्या विवर्जितं त्रिषष्ट्या

विहृतं निरग्रकं स्यात्तं गुणं च वद । यदि त्वं कुट्टके पटीयान् पटुतरोऽसि ॥

उदाहरण—

ऐसा कौन गुण है जिससे गुणा नव्वे से जुड़ा और तरेसठ से भागा हुआ सौ निःशेष होता है ॥

अथवा, ऐसा कौन सा गुण है कि जिससे गुणित नव्वे से हीन और तरेसठ से भागा सौ निःशेष होताहै ॥

न्यासः । भाज्यः १०० । हारः ६३ । क्षेपः ९० अत्रवल्ली १
१
१
२
२
१
९०
०

'–उपान्तिमेव–' इत्यादिना जातं राशिद्वयम् २४३० / २५३०
पूर्ववल्लब्धिगुणौ ३० / १८ ।

अथवा भाज्यक्षेपौ दशभिरपवर्तितौ भा० १० । क्षे० ९ ।
हा० ६३ ।

एभ्योऽपि पूर्ववद्वल्ली ०
६
३
९
०

'–उपान्तिमेन–' इत्यादिना राशिद्वयम् २७ / १७१

पूर्ववज्जातौ लब्धिगुणौ $\frac{७}{४५}$

अत्र लब्धयो विषमा इति स्वतक्षणा $\frac{१०}{६३}$ माभ्यां शोधितौ जातौ लब्धिगुणौ $\frac{३}{१८}$।

अत्र लब्धिर्न ग्राह्या गुणघ्नभाज्ये क्षेपयुते हारभक्ते लब्धिश्च ३०। अथवा, भाज्यक्षेपापवर्तनेन १० पूर्वानीता लब्धिः ३ गुणिता जाता सैव लब्धिः ३०। अथवा, हारक्षेपौ नवभिरपवर्तितौ

भा० १००। क्षे० १०।
हा० ९।

पूर्ववद्वल्ली १४। जातं राशिद्वयम् $\frac{४२०}{३०}$

३
१०
०

तक्षणे जातम् $\frac{३०}{२}$ हारक्षेपापवर्तनेन ९ गुण्यं संगुण्य जातौ लब्धिगुणौ तावेव $\frac{३०}{१८}$।

अथवा भाज्यक्षेपौ हारक्षेपौ चापवर्त्य न्यासः

भा० १०। क्षे० १।
हा० ७।

अत्र जाता वल्ली १
२
१
०

पूर्ववज्जातं राशिद्वयम् $\frac{३}{२}$ तक्षणाज्जातं तदेव $\frac{३}{२}$ भाज्यक्षेपहारक्षेपापवर्तनेन क्रमेण लब्धिगुणौ गुणितौ जा

तौ तावेव $\frac{३०}{१८}$ गुणलब्ध्योः स्वहारौ क्षेपावित्यथवा लब्धि-गुणौ $\frac{१३०}{८१}$ वा $\frac{२३०}{१४४}$ इत्यादि ।

योगजे गुणाप्ती $\frac{१८}{६०}$ स्वतक्षणाभ्यामाभ्यां $\frac{६३}{१००}$ शुद्धे जाते नवतिशुद्धौ गुणाप्ती $\frac{४५}{७०}$ वा । $\frac{१०८}{१७०}$ वा । $\frac{१७१}{२७०}$ इत्यादि ।

न्यास । भाज्य १०० । हार ६३ । क्षेप ९० । यहां हार भाज्यों के पर-स्पर भागदेने से १ शेषरहा, इसलिये यही अपवर्तनाङ्क हुआ, उससे अपवर्त-न देकर अर्थात् अनपवर्तन देकर उक्त प्रकारसे वल्ली निष्पन्न हुई १
१
१
२
२
१
९०
०

'–उपान्तिमेन, स्वोर्द्ध हतेऽन्त्येन युते तदन्त्यं त्यजेन्मुहुः स्यादिति राशि-युग्मम्, इस प्रकारके अनुसार दो राशिहुए २४३०
१५३०

इन्हें अपने अपने हार से तष्टित किया तो लब्धि गुण हुए $\frac{३०}{१८}$ अथवा भाज्यक्षेप में १० का अपवर्तन दिया तो हुए भाज्य १० । हार ६३ 'क्षेप ९ । यहां उक्तरीति से वल्ली निष्पन्नहुई ०
६
३
५
०

और पूर्व प्रकार से दो राशि हुए $\frac{१७१}{२७}$ तष्टित करने से हुए $\frac{४५}{७}$ यहांल-ब्धि विषमथी इसलिये अपने अपने तक्षण $\frac{६३}{१०}$ में तष्टित किये तो लब्धिगुण हुए $\frac{३}{१८}$ यहांपर लब्धि वास्तव नहीं हुई किंतु भाज्य को गुणसे गुणकर क्षेप जोड़कर उसमें हारका भाग दिया तो वास्तव लब्धि ३० आई । अथवा पहिली लब्धि ३ को अपवर्ताङ्क १० से गुणादिया तो वास्तव लब्धि ३० हुई । इसभांति पहिलेकेही लब्धि गुणहुए $\frac{३}{१८}$ ।

अथवा हारक्षेपमें नौका अपवर्तन दिया तो हुए भाज्य १०० । हार ७ ।

राशी ७।५। युतौ चेत्क्रियेते तर्हि '—जातं त्रयोविंशतिः' इति पूर्वालापो न घटते ॥

अथ यत्र रूपाणामृणत्वे प्रकाराभ्यामुत्पन्नयोर्मानयोरेकतरे एवोपपन्ने भवतस्तादृशमुदाहरणं पूर्वचतुर्थमस्तीति तदेव प्रदर्शयति—याविति ॥

'यौ राशी किल—' इस पूर्व उदाहरण में या १ । का १ राशि कल्पना किये उनका घात याकाभा १ हुआ और उनके वर्ग याव १ । काव १ हुए इन सब का योग 'याव १ काव १ याकाभा १ या १ का १' उन्हीं दोनों राशि से घटे हुए तेईस के वर्ग 'याव १ काव १ याकाभा २ या ४६ का ४६ रू ५२९' के तुल्य है इस कारण समीकरण के लिये न्यास ।

याव १ काव १ याकाभा १ या १ का १ रू ०
याव १ काव १ याकाभा २ या ४६ का ४६ रू ५२९

'भावितं पक्षतोऽभीष्टात्—' इसके अनुसार क्रिया करने से हुए

या ४७ का ४७ रू ५२९
याकाभा १

वर्णाङ्कों ४७ । ४७ का घात २२०९ हुआ इसमें ऋण रूप ५२९ जोड़ देने से १६८० शेष रहा इसमें इष्ट ४० का भाग देने से फल ४२ आया अब इष्ट ४० और फल ४२ को वर्णाङ्क ४७ । ४७ में घटा देने से राशि ७ । ५ आये । और यदि इष्ट ४० तथा फल ४२ को वर्णाङ्क ४७ । ४७ में जोड़ देवें तो '—जातं त्रयोविंशतिः, यह आलाप नहीं घटेगा ॥

चतुर्थोदाहरणम्[1]—'—पञ्चाशत्त्रियुताथ वा—, इति। अत्रोदाहरणे यथोक्तकृतभाविताङ्केन विभक्ते जातम् 'या १०७ का १०७ रू २८०९ , अत्र वर्णाङ्काहतिरूपैक्यम् ८६४० इष्टतत्फले ९० । ९६ आभ्यां वर्णाङ्कावूनितौ राशी ११ । १७ एवमन्यत्रापि ॥

क्वचिद्बहुषु साम्येषु भावितोन्मितीरानीय ताभ्यः समीकृतच्छेदगमाभ्यः साम्ये पूर्वबीजक्रिययैव राशी ज्ञायेते । अत्र 'राशी, इति द्विवचनोपादानादन्येषां आदिवर्णानामिष्टानि मानानि कल्प्यानीत्यर्थात्सिद्धम् ॥

इति श्रीभास्करीये बीजगणिते भावितम् ॥

---

[1] कुत्रचिन्मूलपुस्तके 'पूर्वोदाहरणम्' इति पाठः ।

'पञ्चाशत्त्रियुताथवा—' इस चौथे उदाहरण में उक्त रीति के अनुसार समान पक्ष सिद्ध हुए

याव १ काव १ या का भा १ या १ का १ रू ०
याव १ काव १ या का भा २ या १०६ का १०६ रू २८००

'भावितं पक्षतोऽभीष्टात्—' इसके अनुसार क्रिया करने से हुए

या १०७ का १०७ रू २८०६
या का भा १

वर्णाङ्कों १०७।१०७ का घात ११४४९ हुआ इसमें ऋण २८०६ जोड़ देने से शेष ८६४० रहा इसमें इष्ट ९० का भाग देने से ९६ लब्धि आई अत्र इष्ट ९० और लब्धि ९६ को वर्णाङ्क१०७।१०७में घटादेने से राशि ११। १७ मिले इसीभांति और जये भी जानना चाहिये।

सोदाहरण भावित समाप्त हुआ॥

---

इत्याचार्य श्रीसरयूप्रसादसुत—दुर्गाप्रसादोन्नीते बीजविलासिनि भावितं समाप्तम्॥ इति शिवम्।

दुर्गाप्रसादरचिते भाषाभाष्ये मिताक्षरे।
वासनासंगतं पूर्णं भावितं चापि सांप्रतम्।

---

आसीन्महेश्वर इति प्रथितः पृथिव्या-
माचार्यवर्यपदवीं विदुषां प्रयातः।
लब्ध्वावबोधकलिकां तत एव चक्रे
तज्जेन बीजगणितं लघु भास्करेण ॥ ९५ ॥

अथ प्रकृतग्रन्थस्य प्रचारार्थं गुरूत्कर्षप्रतिपादनात्मकं मङ्गलमाचरन्प्रबन्धसमाप्तिं दर्शयति—आसीदिति। विदुषां पण्डितानां मध्ये आचार्यवर्यपदवीं प्रयातः अत एव पृथिव्यां प्रथितः, अनन्यसाधारणाचार्योपाधिभाक्तया जगत्प्रसिद्ध इत्यर्थः। 'महेश्वरः' इत्यासीत्। तज्जेन तदङ्गजन्मना भास्करेण ततो महेश्वराचार्यादेव अवबोधकलिकां ज्ञानकलिकां लब्ध्वा प्राप्य लघु पाठेन स्वल्पकायं बीजगणितं चक्रे। वसन्ततिलकावृत्तमेतत् ॥

ब्रह्माह्वयश्रीधरपद्मनाभ-
बीजानि यस्मादतिविस्तृतानि।
आदाय तत्सारमकारि नूनं
सद्युक्तियुक्तं लघु शिष्यतुष्ट्यै ॥ ९६ ॥

ननु बीजगणितानि ब्रह्मगुप्तादिभिः प्रतिपादितानि तत्किमर्थमाचार्येण यतितमिति शङ्कायामुत्तरमाह—ब्रह्मेति। ब्रह्माह्वयो ब्रह्मगुप्तः 'श्रीधरः श्रीधराचार्यः, पद्मनाभः, एतेषां बीजानि यस्मात् अतिविस्तृतानि तस्मात् सारमादाय शिष्याणां तुष्ट्यै सद्युक्तियुक्तं सत्यः समीचीना या युक्तयः प्रश्नभङ्गरूपा वासनारूपा वा ताभिर्युक्तं लघु तद् बीजमकारि नूनम्। इन्द्रावज्रावृत्तमदः ॥

अत्रानुष्टुप्सहस्रं हि ससूत्रोद्देशके मितिः।

ननु कथं लघ्वित्याशङ्कयामाह—अत्रेति। हि यतोऽत्र ससूत्रोद्देशके बीजे अनुष्टुभां सहस्रं मितिः परिमाणम्। पूर्वेषां बीजगणितेषु तु सहस्र द्वयादिमानमस्तीत्यतः संक्षिप्तमिदं न तु विस्तृतम् ॥

क्वचित्सूत्रार्थविषयं व्याप्तिं दर्शयितुं क्वचित् ॥ ९७ ॥
क्वचिच्च कल्पनाभेदं क्वचिद्युति मुदाहृतम् ।

नन्विदमपि विस्तृतमस्ति क्वचित्, क्वचिदेकस्मिन्नेव विषय उदाहरण बाहुल्योक्तेरित्याशङ्कायामुत्तरमाह–क्वचिदिति। क्वचित्सूत्रार्थविषयं दर्शयितुमुदाहृतम् यथा– 'चतुस्त्रिगुणयोराश्योः–' इति। 'द्विगुणेन कयोराश्योः–' इति। 'त्रिपञ्चगुणराशिभ्यां–' इति। यौराशी किल–' इति। नह्येकस्मिन्नुदाहृते 'भावितं पक्षतः–' इति सूत्रस्यार्थः सर्वोऽपि विषयीभवति। तस्माद शेषं सूत्रार्थं दर्शयितुमुदाहरण चतुष्टस्याप्यावश्यकता। क्वचिद् व्याप्तिं दर्शयितुमुदाहृतम्। यथा–'पञ्चकशतदत्तधनात्–' इत्युदाहृत्य' एककशतदत्तधनात्–' इति तादृशमेव पुनरुदाहृतम्। इदं यदि नोदह्रियते तर्हि स्वकृते प्रकारविशेषे मन्दानां विश्वासोन भवेदित्येतदावश्यकम्। एवं कल्पना भेदं दर्शयितुम् 'एको ब्रवीति–' इत्युदाहरणमेकवर्णसमीकरण उदाहृतम्। एवं विविधयुक्ति प्रदर्शनार्थमपि बहुत्रोदाहृतमस्ति तस्मादसौ विस्तृतिर्न दोषावहा ॥ ९८ ॥

न ह्युदाहरणान्तोऽस्ति स्तोकमुक्तमिदं यतः ॥ ९८ ॥

ननु पूर्वबीजेषूदाहरणानि बहूनि सन्तीह तु स्वल्पान्येवोक्तानीति न सकलोदाहरणावगमः स्यादित्यत आह नेति। हि यत उदाहरणान्तो नास्ति अत इदं स्तोकं स्वल्पमुक्तम् ॥

दुस्तरः स्तोकबुद्धीनां शास्त्रविस्तरवारिधिः।
अथ वा शास्त्रविस्तृत्या किं कार्यं सुधियामपि॥९९॥

नन्वत्र स्वल्पमुक्तं पूर्वबीजानि त्वतिविस्तृतान्यतस्तान्येव मन्दप्रयोजनायालमिति शङ्कायामाह–दुस्तर इति। यो हि विस्तरः स मन्दप्रयोजकः सुधीप्रयोजको वा। नाद्यः। यतः शास्त्रविस्तरवारिधिः स्तोकबुद्धीनां दुस्तरो दुरवगाहः। नान्त्यः।

सुधियामपि शास्त्रविस्तृत्या किं कार्यम्। यतस्ते कल्पनाकल्पकाः। ननु लघ्वपि बीजं मन्दप्रयोजकं सुधीप्रयोजकं वा। नाद्यः। तैर्ज्ञातुमशक्यत्वात्। नान्त्यः। तेषां कल्पकत्वात्। इति चेन्न स्वल्पग्रन्थस्य मन्दानामभ्याससाध्यत्वान्न तावदाद्यपक्षे दोषः। द्वितीयेऽपि न दूषणमित्याह–

उपदेशलवं शास्त्रं कुरुते धीमतो यतः।
तत्तु प्राप्यैव विस्तारं स्वयमेवोपगच्छति ॥ १०० ॥

उपदेशलवमिति। यतः शास्त्रं धीमत उपदेशलवं कुरुते तत्तु शास्त्रं सुधियं प्राप्यैव स्वयमेव विस्तारमुपगच्छति। न हि सुधियोऽपि किंचिदनधीत्य जानन्ति। अत इदं मदुक्तं सुधीमन्दसाधारणप्रयोजनायेति सर्वैरपि पठनीयम् ॥ अत्र दृष्टान्तमाह–

जले[1] तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः[2] १०१ ॥

जलेइति। मनाक् ईषदपि तैलं जले वस्तुशक्तितः आधाराधेयमहिम्ना स्वयं विस्तारंयाति। बिन्दुमात्रमपि तैलं सलिले प्रक्षिप्तं सद्द्रुतमेवाबद्धचन्द्रककलापेन तत्सलिलमाच्छादयतीति तात्पर्यम्। एवमग्रेऽपि योजनीयम्। खलो दुष्टः। गुह्यं वाचानुद्घाटनीयं वृत्तम्। पात्रं योग्यतमः पुरुषः। दानं मूल्यग्रहणं विना स्वस्वत्व ध्वंसपूर्वक परस्वत्व जनकस्त्यागः। प्राज्ञः। शास्त्रं यत्र तद्विदां संकेतः स ग्रन्थ कलापः ॥

गणकभणितिरम्यं बाललीलावगम्यं
सकलगणितसारं सोपपत्तिप्रकारम्।

---

१ 'जले–' इत्यस्य प्राक् 'यथोक्तं यन्त्राध्याये' इति पाठः प्रायो मूलपुस्तक उपलभ्यते
२ '—वस्तुशक्तितः' इत्यस्याग्रे 'तथा गोले मयोक्तम्–उल्लसदमलमतीनां त्रैराशिकमात्रमेव पाटी बुद्धिरेव बीजम्। तथा गोलाध्याये मयोक्तम्–अस्ति त्रैराशिकं पाटी बीजं च विमला मतिः। किमज्ञातं सुबुद्धीनामतो मन्दार्थमुच्यते।' इत्यपि पाठः प्रायो मूलपुस्तके दृश्यते परं टीकाकर्त्रा न धृतः।

इति बहुगुणयुक्तं सर्वदोषैर्विमुक्तं
पठ पठ मतिवृद्ध्यै लघ्विदं प्रौढिसिद्ध्यै १०२ ॥

इति श्रीभास्करीये सिद्धान्तशिरोमणौ
बीजगणिताध्यायः समाप्तः ।

एवं स्वकृतस्य बीजगणितस्य गुणान्युक्त्वा संस्थाप्योपसंहरति—गणकेति । हेगणक, मतिवृद्ध्यै प्रौढिसिद्ध्यै च, भणितिरम्यं भणितयः शब्दास्तै रम्यं रमणीयम् । बाललीलया सुखेनेति तात्पर्यम्, अवगम्यम् । सकलगणितानां सारं, वासनामूलकतयेति भावः । सोपपत्तयः प्रकारा यस्मिन् तादृशम् । इति प्रदर्शितैर्बहुभिर्गुणैर्युक्तं समेतम् । सर्वदोषैः प्रमेयांशादिदूषकदोषसमूहैर्विशेषेण मुक्तं वर्जितं, लघु, ग्रन्थसंख्यया क्षुद्रकायमिदं बीजगणितं पठ पठ । आदरातिशयोक्तिरियम् । इह वृद्धिसिद्धिशब्दौ कुल्याप्रवृत्तिन्यायेन मङ्गलार्थमपि प्रकाशयतः,प्रायेण माङ्गलिका आचार्या महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिसिद्ध्यादिशब्दानादितः प्रयुञ्जते अत एव भगवता महाभाष्यकारेण 'वृद्धि रादैच । १।१।१' इति सूत्रव्याख्यानावसरे 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति, सिद्धान्तितमिति शिवम् ॥

अखण्डसौभाग्यविभूतिसूति-
र्विश्वंभरालंकरणैकहेतुः ।
समीहिताकल्पनकल्पवल्ली
जयत्ययोध्या कमलालया च ॥ १ ॥
या रक्तवर्णापि सुधासवर्णा
दुर्वर्णकीर्णापि सुवर्णपूर्णा ।

१ आदिरित्युपलक्षणं तेन मध्यान्तयोरपि ज्ञेयम् ।

गोत्रोनिवेशापि लसत्सुधर्मा
विराजमानाप्यविराजमाना ॥ २ ॥

तस्याः पृष्ठचरीव पश्चिमदिशि क्रोशाष्टकस्यान्तरे
पाण्डित्यास्पदमस्ति पण्डितपुरी पिल्खावँपर्यन्तभूः ।
यत्राभ्यर्थनतोऽपि भूरिदतया गीतावदानोत्करः
प्रालेयद्युतिशेखरो विजयते श्रीजङ्गलीनायकः ॥ ३ ॥

तत्र श्रीशिवपादपद्म भजनप्राप्तप्रसादोदय--
श्चम्पूकृन्नृपरामचन्द्रचरिते दुर्गाप्रसादः कविः ।
मुग्धानामपि बोधसाधनविधिं बीजोपरि व्याकृतिं
प्राणैषीरिपपठीर्हिताय गुणभूभोगीन्दु (१८१३) संख्ये शके ४॥

अत्युत्तानतरप्रमेयरचनापारम्परीबन्धुरं
स्पष्टोदाहरणक्रमं क्वचिदहो नूत्न क्रियामांसलम् ।
एवं बालकबोधसाधनविधौ टीकाशतेभ्योऽधिकं
भाषाभाष्यमिदं पठन्तु शिशवो व्युत्पत्तिसंपत्तये ॥ ५ ॥

समाप्तमदृष्टीकाद्वयोपेतं बीजगणितम् इति शिवम् ।

सोदाहरणसूत्रश्लोक संख्या २०३ ॥

---

१ विरोधाभासस्तु स्फुट एव तत्परिहारे गवां समूहो गोत्रा 'इनित्रकट्यचश्च ४ । २ । ५१ इति त्रप्रत्ययः ॥

अथ भावितवासना निरूप्यते—

सा च क्षेत्रगतराशिगतभेदेन द्विविधा, तत्र प्रथमं तावत्क्षेत्रगताऽभिधीयते- 'त्रिपञ्चगुणराशिभ्यां—' इत्युदाहरणे यथोक्तकरणे जातौ समानौ पक्षौ

या ३ का ५ या का भा १ रू ०
या ० का ० या का भा ० रू ६२

समयोः समशुद्धौ समतैवेति द्वितीयपक्षस्थेनैतादृशेन भावितेन 'या का भा० ' हीनौ यथा स्थितावेव। पुनस्तौ परपक्षस्थैर्वर्णाङ्करूपतुल्यैः 'या ३ का ५ रू ०' हीनौ तदापि समानावेव

या ० का ० या का भा १ रू ०
या ३ का ५ या का भा ० रू ६२

इह पक्षो भावित समो निष्पन्नः। अथ वा पक्षौ समौ कल्पितौ

या ३ का ५ या का भा ४ रू ३०
या ४ का ८ या का भा ३ रू ६२

एतौ परपक्षस्थेन भावितेन 'या का भा ३' हीनौ तदापि समौ

या ३ का ५ या का भा १ रू ३०
या ४ का ८ या का भा ० रू ६२

एतावाद्यपक्षस्थैर्वर्णाङ्करूपैः 'या ३ का ५ रू ३०' हीनौ तदापि समावेव

या ० का ० या का भा १ रू ०
या १ का ३ या का भा ० रू ३२

इहापि पक्षो भावितसमो निष्पन्नः। अथवा 'यौ राशी किल या च रा- शिनिहतिः—,इत्युदाहृतौ राशी या १। का१। राशिनिहतिः या का भा १। राशिवर्गौ याव १। काव १। एषां युती राशिद्वयोनत्रयोविंशति ( या १ का १ रू २३ ) वर्गेण समेति जातौ पक्षौ

याव१ काव१ या का भा१ या१ का१ रू०
याव१ काव१ या का भा२ या ४६ का ४६ रू ५२९

एतौ पूर्वपक्षस्थेन भावितेन 'या का भा १, हीनौ तदापि समावेव

याव१ काव१ या का भा० या१ का१ रू०
याव१ काव१ या का भा१ या ४६ का ४६ रू ५२९

एतौ परपक्षस्थैः 'याव १ काव १ या ४६ का ४६ रू ५२९, यभिन्नौ तदापि समावेव

या ४७ का ४७ रू ५२९
या का भा१

इहापि पक्षो भावितसम एव निष्पन्नः। एवं सर्वत्र समशोधनेन यथैक- स्मिन्पक्षे भावितमन्यस्मिन्पक्षे स्वाङ्कगुणितौ वर्णौ रूपाणि च भवेयुस्तथा य- तितव्यं येन पक्षो भावितसमः स्यात् ॥

अथवा 'द्विगुणे नकयो राश्योः –' इत्युदाहरणे यथोक्तकरणे जातौ पक्षौ समौ

या १० का १४ रू ५८ या का भा०
या० का० रू० या का भा २

एतौ पूर्वपक्षस्थेन भावितेन 'या का भा०' हीनौ यथास्थितावेव । पुनः पर पक्षस्थेन 'या० का० रू०' अनेन हीनौ तदापि यथास्थितावेव, परमत्र प्रथम-पक्षो द्विगुणेन भावितेन तुल्यः संपन्नः, प्रकृते भाविततुल्योऽपेक्षितः तेन पक्षौ रूपद्वयमितेन भाविताङ्केन भक्तौ तदापि समावेव या ५ का ७ रू २९

या का भा१

एवं पक्षो भावितसमो जातः । अत्रैकपक्षे भावितशेषस्यधनत्वार्थं पक्षयोर्यो भावितो लघुस्तत्तुल्येन भावितेन पक्षौ हीनौ कार्यौ तर्हि लघुभावितपक्षे भावितं शून्यमुर्वरितं बृहद्भावितपक्षेतु लघुभावितोनबृहद्भावित सममुर्वरितं तदापि पक्षौ समावेव ततो बृहद्भावितपक्षस्थवर्णद्वयेन सरूपेण पक्षौ हीनौ कृतौ तर्हि बृहद्भावितपक्षे सरूपा वर्णाङ्काः शून्यमिताः लघुभावितपक्षे तदन्तरमिताः एवं चात्र शून्यमितशेषाणां प्रयोजनाभावाद्बृहद्भाविताल्लघुभावितं शोधितं बृहद्भावितपक्षस्य वर्णाङ्केन सरूपेण लघुभावितपक्षस्थः सरूपो वर्णाङ्को हीनः कृतो लाघवेनैवेत्युपपन्नं पक्षयोर्भावितसमत्वज्ञानार्थं यथोक्तम् । अथ राशिज्ञाने वासना—तत्र 'चतुस्त्रिगुणयोः–' इत्युदाहरणे यथोक्त करणे जातौ पक्षौ

या ४ का ३ रू २
याका भा १

अत्राद्यपक्षो भावितसमो वर्तते भावितं त्वायतफलम् 'तथायते तद्भुजको-टिघातः' इत्युक्तत्वात् । अतो राशी भुजकोटी क्षेत्रदर्शनम्—




अस्य क्षेत्रस्यान्तरे यावत्तावच्चतुष्टयं कालकत्रयं रूपद्वयंच वर्तते, तत्र क्षेत्र-मध्ये यावत्तावच्चतुष्टयस्य दर्शनम्—



अत्र क्षेत्रशेषे संपूर्णः कालको दर्शयितुमशक्यः यतो दीर्घभुजोत्र कालकमानम्, स च यावत्तावच्चतुष्टयापनयनेन रूपचतुष्टयोनो दृश्यते अतो रूपचतुष्टयोनकालकः क्षेत्र शेषभुजः 'का १ रू ४' अयं त्रिगुणितस्तदा ॥

क्षेत्रदर्शनम्—




अथ भावितक्षेत्रदर्शनम्—




अत्र कालकत्रयस्य दर्शनम्—



अत्र क्षेत्रशेषे रूपत्रयोन यावत्तावन्मितो भुजः 'या १ रू ३' सच चतुर्गुणितः 'या ४ रू १२' तदा क्षेत्रदर्शनम्—



अत्रोभयथापि यावत्तावच्चतुष्टयं कालकत्रयंच वर्णाङ्काहतितुल्यंरूपैक्यं भावितक्षेत्रमध्ये प्रदर्शितं भवति ।

अथ यदि संकीर्णमेव यावत्तावच्चतुष्टयं कालकत्रयं च प्रदर्श्यते तदैवं दर्शनं भवति–

का

या

इह ये कोणे कोष्ठकाः समुत्पन्नास्ते वर्णाङ्काहति ( १२ ) तुल्या एव अथ वर्णाङ्काहतितुल्यास्ते कोष्ठका यदि कालकत्रयमध्ये गण्यन्ते तर्हि यावत्तावच्चतुष्टयार्थं तावन्त एव कोष्ठका अपेक्षिताः, यदि यावत्तावच्चतुष्टयमध्ये गण्यन्ते तर्हि कालकत्रयार्थं तावन्त एव कोष्ठका अपेक्षिताः, अत उभयथापि वर्णाङ्काहतितुल्यकोष्ठकैर्बहिर्युतं चेद्भावितक्षेत्रं तर्हि क्षेत्रमध्ये यावत्तावच्चतुष्टयं कालकत्रयं च प्रदर्शितं भवति यथा–

या

अत्र बहिःस्थितानां कोष्ठकानां प्रयोजनाभावाद्यावत्तावच्चतुष्टयं कालकत्रयं च वर्णाङ्काहतितुल्यरूपोनं (या ४ का ३ रू १२) क्षेत्रमध्ये प्रदर्शितं यथा–

का

या

भु
१४ को

अत्र संपूर्णभावितक्षेत्रं तु यावत्तावच्चतुष्टयं कालकत्रयं रूपद्वयं च 'या ४ का ३ रू २' अत्र संपूर्णक्षेत्रे ( या ४ का ३ रू २ ) प्रदर्शितस्वरूपं लघुक्षेत्रं ( या ४ का ३ रू १२ ) हीनं कृतं तदा वर्णाङ्काहतिरूपैक्यमितं १४ भावितक्षेत्रान्तर्वर्तिनोऽधस्तनस्य लघुक्षेत्रस्य फलं ( १४ ) लघुक्षेत्रमप्यायतक्षेत्रमेव, अतो लघुक्षेत्रीयभुजकोटिघातरूपं फलम् १४। तत्र भुज इष्टः कल्पितः

तेन भक्ते फले कोटिः। अत्रेष्टतत्फले लघुक्षेत्र भुजकोटी सिद्धे। इह भुजो रू-पचतुष्टययुतस्तदा कालकमानम्, कोटिः रूपत्रययुता यावत्तावन्मानम्। अ-थवा। इष्टः कोटिमितः कल्प्यः तेन लघुक्षेत्रफले भक्ते भुजःस्यात्। कोटिः रूपचतुष्टययुता कालकमानम्, भुजो रूपत्रययुतस्तदा यावत्तावन्मानम्। यतो रूपचतुष्टयोनकालकः, तथा रूपत्रयोनयावत्तावन्मितो लघुक्षेत्रे भुजः कोटिर्वा कोटिर्भुजोऽस्तीति प्रत्यक्षम्। अत उपपन्नं 'वर्णाङ्काहतिरूपैक्यं-' इत्यादि। इष्टफलयोर्मध्ये यत्र यावत्तावद्वर्णाङ्को योजितस्तत्कालकमानम्, यत्र कालक वर्णाङ्को योजितस्तद्यावत्तावन्मानम्, राश्योर्गुणकौ वर्णाङ्कशब्देनोक्ताविति। इयं क्रिया वर्णाङ्कयो रूपाणां च धनत्वे प्रतिपादिता, यदा तु वर्णाङ्कावृणगतौ भवेतां तदा तस्यैवान्तर्भावितक्षेत्रं कोणस्थं स्यात्। तद्यथा—वर्णाङ्करूपाणा धनत्वे भावितक्षेत्रं महत्तरं तदन्तर्गतं क्षेत्रद्वयं वर्णाङ्काहतितुल्यरूपोनस्वाङ्कगुण-वर्णमितमेकं वर्णाङ्काहतिरूपैक्यमपरमिति स्थितिरास्ति। अथ वर्णाङ्कयोर्ऋणत्वे रूपाणां धनत्वे तु वर्णाङ्काहतिरूपैक्यं महतः क्षेत्रस्य फलं तदन्तर्गतं क्षेत्रद्वयं तत्र स्वाङ्कगुणवर्णस्य भावितयुतस्य रूपतुल्यस्य तुल्यफलमेकक्षेत्रस्य वर्णाङ्का-हतितुल्यफलमपरक्षेत्रस्य, तद्यथा—'त्रिपञ्चगुणराशिभ्यां—, इत्युदाहरणेपक्षौ

या ३ का ५ या का भा १
रू ६२

समशोधनात्पक्षौ

या ० का ० या का भा १
या ३̇ का ५̇ रू ६२

समयोः समयोगे समतैवेत्यत्र यावत्तावत्त्रयं कालकपञ्चकं च प्रक्षिप्यन्यासः

या ३ का ५ या का भा १
रू ६२

यत्र वर्णाङ्कावृणं रूपाणि तु धनं भावितसमं तत्र क्षेप्यशोध्यादिनाबुद्धिम-त्तैकपक्षे रूपाणि परपक्षे स्वाङ्कगुणवर्णाङ्कौ भावितं च धनगतं सर्वं कार्यम्-अथ प्रकृते यावत्तावन्मानं त्रिगुणं कालकमानं पञ्चगुणं द्वयोर्योगे भावितयु-तस्तदा द्विषष्टिमित इति क्षेत्रदर्शनम्

का

या

अत्र अत्रान्तर्भावितक्षेत्रं कोणस्थं दृश्यते, इदं लिखितं क्षेत्रं द्विपष्टिरूपतुल्यं वर्तते, अत्र रिक्तकोणे वर्णाङ्काहतितुल्याः कोष्ठकाः क्षिप्यन्ते तदा वर्णाङ्काहतिरूपैक्यात्मकफलं महत्क्षेत्रं संपद्यते यथा—

का

या १

अथास्य महतः क्षेत्रस्य फलं वर्णाङ्काहतिरूपैक्यं तदिष्टेन भक्तं फलम् । अत्रेष्टफले महतः क्षेत्रस्य भुजकोटी वा कोटिभुजौ भवतः परमत्र कोटिभुजयोरेकतरो यावत्तावद्वर्णाङ्केन हीनस्तदा कालकमानम्, अन्यः कालकाङ्केन हीनस्तदा यावत्तावन्मानं स्यात् भावितक्षेत्रकोटिभुजयोर्महत्क्षेत्रकोटिभुजाभ्यामल्पत्वात् अत उपपन्नमेताभ्यामूनौ वर्णाङ्कौ व्यत्ययान्माने भवतः । अत्रेष्टं तथा कल्पनीयं यथा स्वयमेकतरवर्णाङ्कादधिकं भवेत् । इह वर्णाङ्कावृणगतावतोऽत्रेष्टफलाभ्यां युतावेव राशी भवतः धनर्णयोरन्तरस्यैव योगत्वान्नोक्तमन्तरमाचार्यैः । अत्रोदाहरणम्—भावितसमपक्षः 'या $\dot{३}$ का $\dot{५}$ रू ६२' वर्णाङ्काहतिः १५ रूपैः ६२ युता ७७ इष्ट७ भक्ता फलम् ११ इष्टफले महतः क्षेत्रस्य भुजौ ७ । ११ एतौ वर्णाङ्काभ्यां $\dot{३}$ । $\dot{५}$ युतौ तत्र 'धनर्णयोरन्तरमेव योगः' इति जाते कालकयावत्तावन्माने ४ । ६ अथ यत्र वर्णाङ्कौ धनं रूपाणि ऋणं तत्र द्वैविध्यमस्ति, 'अन्योन्यभुजतो न्यूनौ वर्णाङ्कौ' इत्येकः प्रकारः । 'अन्योन्यभुजतोऽधिकौ वर्णाङ्कौ' इति द्वितीयः प्रकारः । यथा 'द्विगुणेन कयो राश्योः —' इत्युदाहृतादुक्तवज्जातौ पक्षौ

या ५ का ७ रू ७६
या का भा १

अत्र प्रथमप्रकारे क्षेत्रदर्शनम्—

का

या

६

इह पञ्चगुणित यावत्तावन्मानं तथा रूपपञ्चकोन कालक मानं 'या १ रू ५, सप्तगुणितं 'का ७ रू ३५, क्षेत्रमध्ये दर्शितं भवति क्षेत्रं तु भावित समम् अतो भावितस्वरूपात् 'या ५ का ७ रू २९, अस्माद्दर्शितस्वरूपं 'या ५ का ७ रू ३५ इदं शोधितं चेच्छेषं ६ भावितक्षेत्रान्तर्वर्ति लघुक्षेत्र फलम् ६ इदमिष्ट २ भक्तं फलम् ३ इष्टफले २। ३ वर्णाङ्काभ्यां ५। ७ युते कालकयावत्तावन्माने ७। १० अथवेष्ट फले ३। २ वर्णाङ्काभ्यां ५। ७ युते यावत्तावत्कालकमाने ९। ८ अत इदं। क्रिया त्रयाणां धनत्वे या निरूपिता सैव, तथाहि——भावितसमः पक्षः या ५ का ७ रू २९ वर्णाङ्काहतिः ३५ धनं रूपाणि ऋणं २९ द्वयोरन्तरमेव योग इति वर्णाङ्काहतिरूपैक्यं ६ सिद्धम्। अत्र राशी १०। ७ अथवा ९। ८ वर्णाङ्काभ्या ५। ७ मधिकौ ततः प्रथमः प्रकारउपपन्नः। अथ द्वितीयप्रकारे तु वर्णाङ्काभ्यामल्पौ राशी यथा तत्र भावितसमः पक्षः 'या ५ का ७ रू २९, एतादृशस्थले वर्णाङ्काहतितुल्यफलात्मकं महत्क्षेत्रं, तदन्तर्गतं क्षेत्रद्वयं रूपतुल्यमेकं वर्णाङ्काहतिरूपैक्यमितं द्वितीयम्, वर्णाङ्काविव बृहद्भुजौ, यथा इष्टफलाभ्यां २। ३ वर्णाङ्कौ ५। ७ हीनौ कालकयावत्तावन्माने ३। ४ अथवेष्टफलाभ्यां २। ३ वर्णाङ्कौ ७। ५ हीनौ यावत्तावत् कालकमाने ५। २ महत्क्षेत्रान्तर्गतमेव भावितक्षेत्रमपि दृश्यते यतोऽन्यभुजमानाद्वर्णाङ्कोऽधिकोऽस्तीति स्वाङ्कगुणवर्णस्य मानं भावितक्षेत्रमतिक्रम्यबहिरपि भवति यतो भावितक्षेत्रे कालकमानतुल्या एव यावत्तावद्वर्णाः संभवन्ति नाधिकाः। अथ तत्र स्वाङ्कगुणवर्णयोर्दर्शनम्——

का

या

अथात्र भावितक्षेत्रं स्वाङ्कगुणयावत्तावन्मध्ये यदि गण्यते तर्हि स्वाङ्कगुणकालकमानार्थमन्यद्भावितक्षेत्रमपेक्षितं यदि तु स्वाङ्कगुणकालकमान मध्ये भावितक्षेत्रं गृह्यते तर्हि स्वाङ्कगुणयावत्तावन्मानार्थमन्यद्भावितक्षेत्रमपेक्षितम् उभयथापि भावितक्षेत्रलिखितक्षेत्रयोर्योगे स्वाङ्कगुणवर्णौ भवतः अतो रूपैर्लिखितक्षेत्रसंभाव्यं कथमन्यथा स्वाङ्कगुणवर्णौ रूपोनौ भावितसमौ भवतः। दर्शनम्——

अथ लिखितं रूपात्मकं क्षेत्रं रिक्तकोणे यदि पूर्यते तदैवं भवति दर्शनम्—

या

का

अत्रवर्णाङ्काहतिः क्षेत्रफलमस्ति पूर्वलिखितक्षेत्रे रूपाण्येव अतो वर्णाङ्काहती रूपैरूना सती भावितक्षेत्रे वहिःकोणस्थलघुक्षेत्रस्य फलं भवति तच्च वर्णाङ्का हतिरूपैक्यकरणादेव संपद्यते, यतोऽत्र रूपाणामृणत्वाद्वर्णाङ्काहते स्त्र धनत्वात् 'धनर्णयोरन्तरमेवयोगः, इति कृते रूपैरूनैव वर्णाङ्काहति भवति। अथ लघुक्षेत्रस्यैकमिष्टं भुजं प्रकल्प्य तेन भक्ते फले लब्धमन्यभुजः भुजाभ्यां वर्णाङ्कौ हीनौ राशिमाने भवतः। यतो यावत्तावद्वर्णाङ्कोभुजेन हीनस्तदा कालकमानं कालक वर्णाङ्को भुजेनहीनस्तदा यावत्तावन्मानं स्यात्,

फलितार्थ एषः—

यदि भावितसमे पक्षे रूपाणि धनं स्युस्तर्हीष्टतत्फलाभ्यां वर्णाङ्कौ धनमृणं वा यथावत्संयुक्तावेव व्यत्ययान्माने भवतः, यदि तु रूपाणि ऋणं भवेयुस्तर्हीष्टतत्फलाभ्यां स्वेच्छया संयुतावूनौ च वर्णाङ्कौ व्यत्ययान्माने भवतः, अस्मिन्पक्षे वर्णाङ्कयोर्धनत्वमेव, नहित्रयाणामृणत्वे वर्णमानं धनं संभवति। अत्रापरो विशेषः—यत्र संयुतवर्णाङ्कजे ऊनवर्णाङ्कजे च माने उपपन्ने भवतः तत्र उभेऽपि ग्राह्ये, अन्यत्र तु ये उपपन्ने ते एव ग्राह्ये॥ अथ राशिगता वासनाभिधीयते—तत्र यत्र वर्णाङ्कौ रूपाणि च धनं तत्र प्रदर्श्यते—तत्र भावितक्षेत्रान्तर्वर्तिनो लघुक्षेत्रस्यभुजौ कल्पितौ नी १। पी १। एतौ यावत्तावत्कालकवर्णाङ्काभ्यां युतौ कालकयावत्तावन्माने भवतः। यावत्तावद्वर्णाङ्को यसंज्ञः कालकवर्णाङ्कः कसंज्ञः कृतः। अतो यावत्तावत्कालकमाने नी१ क१। पी१ य१। अथ पक्षो भावितसमः—

याय १ काक १ रू१
या का भा १

पक्षावुत्थाप्येते—यावत्तावन्मानं स्ववर्णाङ्केन (य १) गुणितं तत्र याव

त्तावन्मानं ( नी १ क१ ) स्ववर्णाङ्केन गुणितं प्रथमखण्डस्वरूपम् 'नीय १ कय १'। कालकमानं (पी१ य१ ) स्ववर्णाङ्केन ( क१ ) गुणितं द्वितीयखण्डस्वरूपम् 'पीक १ यक१'। एतयोर्योगो रूपयुतस्तदा प्रथमपक्षस्वरूपं सिद्धम् 'नीय१ पीक १ कय२ रू१, अथ परपक्षे राश्योर्घातार्थं न्यासः——

पी१ य१
नी१ क१
नीपी भा१ नीय१
कपी १ कय१

नीपीभा१ नीय १ पीक१ कय१, इदं परपक्षस्वरूपम् ।

पक्षयोः समशोधनार्थं न्यासः

नीय १ पीक १ कय २ रू १ नी पी भा
नीय १ पीक १ कय १ रू ० नी पी भा

समशोधनाज्जातौ

कय १ रू १
या का भा १ } एतावपि समावेव ।

तेन वर्णाङ्कयोः क १ । य १ इति (कय १) रूपैक्यतुल्यं लघुक्षेत्रस्य भुजयोः नी १ पी १ इति ( नीपीभा १ ) मितं सिद्धम् तत्र नीलकपीतकयोरेकतरं व्यक्तं प्रकल्प्य तेन भक्ते फले द्वितीयं व्यक्तं स्यात् आभ्याराश्यवगमः पूर्ववत् ॥

इतिश्रीसकलगणकसार्वभौमवल्लालदैवज्ञसुतकृष्णदैवज्ञविरचिता (वीजविवृतिकल्पलतावतारोदङ्किता) भावितवासना समाप्तेति शिवम् ॥

---

# उदाहरणचन्द्रिका ॥

---

येषामद्भुतसाहिती[1]चतुरता लोकेषु विख्याप्यते
येषां सान्द्रकृपाकटाक्षलहरी मय्यप्यहो वर्तते ।
ते राकारमणार्थितद्युतियशोनीरन्ध्रिताशान्तरा
ब्राह्मीकेलिभुवो जयन्ति गुरवो दुर्गाप्रसादाभिधाः॥ १ ॥
मा भूद्गीर्पतिमानभङ्ग इति येऽकम्पानुकम्पावशा
दौदासीन्यपुरस्सरंपिपठिषूनध्यापयन्ति द्विजान् ।
तेमानोन्नतगोलवादिपरिषद्राजीवजीवातवो[2]
ज्योतिःशास्त्रचणा[3] जयन्ति गुरवः श्रीबापुदेवारुणाः २ ॥
येष्वध्यापनतत्परेषुधिषणप्रागल्भ्यलक्ष्मीकृष
श्चित्रं चित्रमहो भवन्ति गुरवोऽनन्ता अनन्तातले ।
ते दाक्षीसुतशास्त्र[4]सिन्धुलहरीसाम्राज्यमग्नान्तराः
श्रीमद्रामभजाश्चकासतितमां षट्शास्त्रबीजाङ्कुराः ३ ॥
संगृह्यन्ते विरच्यन्ते व्युत्पाद्यन्ते च यत्नतः ।
प्रश्ना दुर्गाप्रसादेन च्छात्रव्युत्पत्तिवृद्धये ॥ ४ ॥
राश्योर्द्वित्रिकसंख्ययोश्चधनयो र्योगेऽस्वयोः किं तयो
रस्वस्वाहवयोस्तथैव विवरे घातेऽथ घातोद्धृतौ ।
वर्गे वर्गपदे च किं खयुतयोः खेनापि संशुद्धयोः
शून्येनाहतयोस्तथैव हतयोस्तन्मे वदाव्यक्तवित् ॥ ५ ॥

संकलिते न्यासः २ । ३ योगे जातम् ५ । ऋणयोः २̇ । ३̇ योगे जातम् ५̇ । तथानयोः २ । ३̇ योगे जातम् १̇ । तथा २̇ । ३ योगे जातम् १ ।

---

१ साहिती साहित्यशास्त्रम् . २ जीवातुर्जीवनौषधम् . ३ ज्योतिःशास्त्रेण प्रसिद्धा इत्यर्थः ४ दाक्षीसुतः पाणिनिः तस्य शास्त्रं व्याकरणम्

व्यवकलिते न्यासः २ । ३ अन्तरे जातम् १ । तथा २̇ । ३̇ अन्तरे १ । तथा २̇ । ३̇ अन्तरे १ ॥

गुणने न्यासः २ । ३ घाते जातम् ६ । अथ २̇ । ३̇ अनयोर्घाते ६ तथा २̇ । ३ घाते जातम् ६̇ ॥

भागहारे न्यासः ६ । एभ्यां द्वयेन लब्धम् ३ । अथवा ६̇ ऋणद्वयेन २̇ लब्धं धनम् ३ । धनद्वयेन २ लब्धमृणम् ३̇ ॥

वर्गे न्यासः २ । ३ वर्गे जातम् ४ । ९ तथा २̇ । ३̇ वर्गे ४ । ९ मूले २ । ३ वा मूले २̇ । ३̇ ॥

शून्यषड्विधौ न्यासः २ । ३ युतौ शून्य० युतौ २ । ३ शून्यवियुतौ २ । ३ पुनरेतौ २ । ३ शून्यतश्च्युतौ २̇ । ३̇ । अथैतौ २̇ । ३̇ शून्यतश्च्युतौ २ । ३ एतौ शून्यगुणौ ० । ० । एतौ २ । ३ शून्यहृतौ $\frac{2}{0}$ । $\frac{3}{0}$ ॥

यावत्तावत्पञ्च रूपेण युक्ताः
स्वेन स्वे वाऽस्वेन किं स्युर्विहीनाः ।
यावत्तावत्कालनीलाद्यपीता-
स्त्र्याद्यभ्यस्ताः[1] किं हताः स्वेन[2] ते च ६ ॥

न्यासः या५ रूपेण युक्ताः या५ रू१ । तथा ऋणरूपेण युक्ताः या५ रू१̇ ॥

अंतरे न्यासः या ५ रू १ । वा, या५ रू१̇ अंतरे या ५ रू१ वा, या५रू१̇ ॥

गुणने न्यासः या ५ रू १ वर्णे रूपवधे वर्ण एव जातम् या ५ ।

वर्गे न्यासः या ५ रू १ गुणिते जातम् याव २५ या १० रू १ ।

अथ भजने गुणकं 'या ५ रू १' भाजकं प्रकल्प्य गुणितफलात् 'याव २५ या १० रू १' यथोक्तकरणेन लब्धो गुण्यः या ५ रू १ ।

अथानेकगुणने न्यासः 'या ३ का ४ नी ५ पी ६' अयं गुण्यः । अयमेव गुणकः । अस्य खण्डानि या ३ । का ४ । नी ५ । पी ६ । अयं गुण्यखण्डः पृथग्गुणितो यथास्थानं स्वजातितो युक्तो जातः 'याव ९ काव १६ नीव २५ पीव ३६ या का भा २४ या नी भा ३० या पी भा ३६ का नी भा ४० का पी भा ४८ नी पी भा ६०' ॥

---

१ यावत्तावदादिकाः पीतकान्ता वर्णास्त्र्यादिषडन्तैरङ्कैः क्षुण्णा इत्यर्थः । २ आत्मना अर्थात् ते त्र्यादिभिन्ना यावत्तावदादयो वर्णास्तैरेव भिन्ना इति भावः ।

करणी नखसंमितेषुसंख्या
वद योगान्तर एतयोर्वधं च ।
भजने फलमत्र वर्गमूले
करणीषड्विधकारणं ममाशु ॥ ७ ॥

न्यासः क २० । क ५ उक्तवत्करणेन जातो योगः क ४५ अंतरं च क ५ ननु नखाक्षमित्योर्योगे पञ्चविंशतिः २५ अंतरे पञ्चदश १५ कथमेतयोः पञ्चचत्वारिंशत् ४५ योगे, अंतरे च पञ्च ५ इत्याशङ्कापरिहारार्थं सूत्रम्--

आसन्नमूले[1] करणीद्वयस्य
तदैक्यवर्गः करणीयुतिः स्यात् ।
तन्मूलयोरन्तरवर्गतुल्यं
तदन्तरं किं बहुनोदितेन ८ ॥
तन्मूलघातस्य कृतिः करण्यो-
र्वधो भवेद्भाज्यपदं विभाज्यम् ।
हारस्य वर्गेण फलस्य वर्गो
भवेत्फलं तद्धरणे करण्याः ९ ॥
आसन्नमूलेन हताद्वर्गा-
ल्लब्धेन मूलं सहितं द्विभक्तम् ।
भवेत्तदासन्नपदं ततोऽपि
मुहुर्मुहुःस्यात्स्फुटमूलमेवम् ॥ १० ॥

---

१ अत्र सिद्धान्ततत्वविवेककारः—
'बृहदिष्टकृतिघ्नात्स्वादवर्गाच्छेदवर्जितात् ।
पदमिष्टोद्धृतं तत्स्यान्मूलमासन्नसंज्ञकम् ॥
आसन्नमूलेन हतादवर्गाल्लब्धस्तदासन्नपदैक्यखण्डम् ।
यत्तत्स्फुटासन्नपदेन सूक्ष्मं तद्वत्स्फुटासन्नपदं मुहुः स्यात् ॥
रूपयुक्तस्य वर्णस्य कृतौ तद्रूपवर्णयोः ।
वर्गौ तद्द्विघ्नघातस्य तद्वर्णान्मूलसाधनम् ॥
तद्रूपवर्णकृत्योश्च पदयोर्द्विघ्नसंहतिः ।
यदि तत्र स्थिता तर्हि ते पदे एव खण्डके ॥
स्वपदस्येति तन्मूलं स्वीयं खण्डद्वयात्मकम् ।
षष्टिवर्ग ३६०० गुणादङ्कान्मूलं प्राग्वं यदागतम् ॥

अत्रोदाहरणम्—यथाष्टानां ८ मूलम् २। ५१ अनेन सवर्णितेन पुनर्भक्तेषु अष्टसु ८ लब्धम् २। ४८ एतत्पूर्वमूले २। ५१ युक्तम् ५। ३९ द्विभक्तं जातं पुनर्मूलम् २। ५० अस्मादपि पुनर्मूलम् एवं मुहुः कृते स्फुटं भवति।
एवं पूर्वोक्त उदाहरणे न्यासः क २०। क ५ अनयोरुक्तप्रकारेणासन्नमूले ३, २ अनयोरैक्यवर्गे क्रियमाणे किंचिदधिकाः पञ्चचत्वारिंशत् ४५ १/६४।
अन्तरवर्गे ५ १/६४। अनयोर्मूलयोर्वधवर्गः $\frac{६५६१}{६४}$ = १०० $\frac{१६१}{६४}$ करणीगुणनसमो भवति। करणीभजने न्यासः। भाज्यः क २० भाजकः क ५ अत्र भाज्यस्यासन्नमूलं ९/२ भाजकासन्नमूलेन ९/४ हृते फलम् २ अस्यवर्गः ४ भागहारे फलम्। करणीवर्गमूलमासन्नमूलमार्गेणैव॥

अस्त्राणांत्रिशती च येन गुणिता दिग्वर्गयुक्ता भवे-
द्राज्या रुद्रमितैर्हरैर्वद गुणं प्रत्येकमस्त्रागमम्।
एकाशीतिशतत्रयं कतिगुणं भाज्यं द्विशत्या भजे-
त्पञ्चाशत्सहितं[कृतीन्द्र भवता]दृष्टोसिचेत्कुट्टकः॥११॥

न्यासः। भा ३००। क्षे १००। हा ११ अत्रोक्तवज्जाता बल्ली २७
२
१
१००
०

अतो जातं राशिद्वयम् $\frac{१०९००}{४००}$ इदं दृढभाज्यहाराभ्यां तष्टं सञ्जातम् $\frac{१००}{४}$

द्वितीयोदाहरणे न्यासः। भा ३८१। क्षे ५०। हा २००। यथोक्तकरणेन जातौ लब्धिगुणौ $\frac{६५}{५०}$

संश्लिष्टकुट्टके विशेषावगमकं सूत्रम्—

अन्योन्याग्राहतयो
गुणयोःसंश्लिष्टकुट्टके यत्र।

---

संकरोषे षष्टिगुणं द्वियुग्दृष्टनपदोद्धृतम्।
लब्धमागतमूलस्यावयवश्चेति तत्पदम्॥
षष्टिभक्तं सावयवं स्वीयमासन्नमूलकम्।, इति।

वियुतिर्हरेणभक्ता
न निरग्रा स्यात्खिलं तदुद्दिष्टम् ॥ १२ ॥
यो राशिरङ्कैर्निहतोऽद्रिभूभि
र्भक्तो विशेषःस पुनस्त्रिभूघ्नः ।
अद्रीन्दुभिर्भाजित एकशेष
स्तं राशिमाचक्ष्व सखे ममाशु ॥ १३ ॥

अत्रान्योन्याग्राहतयोर्गुणयोः ८ । ३६ अन्तरं १७ हरेण ७ निरग्रं भवतीत्येतदखिलमुद्दिष्टम् अतोऽत्र यथोक्तविधिना जातो गुणः ४ साधुः ।

अथान्यदुदाहरणम्——

यो राशिरीश्वरैः सप्तचन्द्रैर्निघ्नोऽग्निदृग्घृतः ।
पञ्चशेषस्त्रिशेषः स्यात्क्रमाद्राशिं वदाशुतम् ॥ १४ ॥

अत्रान्योन्याग्राहतयोर्गुणयोः ३३ । ८५ अन्तरं ५२ हरेण २३ निःशेषं न भवतीत्येतदुद्दिष्टं खिलम् । अतोऽत्र 'तदा गुणैक्यं परिकल्प्य भाज्यं—, इत्यादिना विधिनानीतो गुणः २० असाधुः । अथात्र संश्लिष्टकुट्टके यदुद्दिष्टं प्रोक्तभाज्यहारक्षेपैः 'अन्योन्याग्राहतयोः—, इत्यादिना च खिलं न स्यात् तस्मिन् गुणैक्यं हारोऽग्रैक्यं चेति त्रयाणां भाज्यहारक्षेपाणां यद्यपवर्तो न संभवेत् तर्हि तेभ्यः प्रोक्तवत्साधितो गुणः 'इष्टाहतःस्वस्वहरेण—, इत्यादिनानेकविधोऽपि स्फुटो भवति ।

यथा । 'यो राशिरङ्कैः—, इत्युदाहरणे गुणैक्यं २२ हारः १७ अग्रैक्यं ३ एषां भाज्यहारक्षेपाणामपवर्तो न संभवतीत्यतोऽत्र प्रोक्तवत्साधितो गुणः ४, इष्टाहतःस्वस्वहरेण—, इत्यादिना जातोऽनेकविधः २१।३८।५५। इत्यादिः । एते सर्व एव गुणाः स्फुटा भवन्ति ।

एवं यत्र गुणैक्यं हारोऽग्रैक्यं चेति त्रयाणां भाज्यहारक्षेपणामपवर्तः संभवेत् तत्र 'इष्टाहतः-, इत्यादिना साधितेष्वनेकेषु गुणेषु कतिचिदुपपद्यन्ते कतिनिच्च नेत्यतस्तत्र गणितेन स्वबुद्ध्या वा बीजक्रियया वा पूर्वमेकः स्पष्टो गुणः साध्यः । तत उद्दिष्टहरमेव हरं प्रकल्प्य 'इष्टाहतः स्वस्वहरेण—, इत्यादिना साधिता गुणाः सर्व एव स्फुटा भवन्ति ।

यथा 'कः पञ्चनिघ्नो विहृतस्त्रिषष्ट्या—, इत्याचार्योक्तनोदाहृतौ गुणैक्यं १५ हारः ६३ अग्रैक्यं २१ एषां भाज्यहारक्षेपाणां त्रिभिरपवर्तः संभवतीं-

न्यवर्ने कृते जाता इष्टभाज्यहारक्षेपाः इ. भा. ५ इ. हा. २१ इ. क्षे. ७ अतो गुणः १४ 'इष्टाहत—, इत्यादिना जातोऽनेकविधः ३५ । ५६ । ७७ । ९८ इत्यादिः । एष्वनेकेषु गुणेषु १४ । ७७ इत्यादय उपपद्यन्ते, स्फुटा इत्यर्थः । ३५ । ५६ । ९८ इत्यादयश्च नोपपद्यन्ते अतोऽत्र पूर्वं यः स्फुट एव १४ अयं गुण आगतः स एवेष्टाहतेन त्रिषष्टिमितोद्दिष्टहरेण युक्तः कार्यः । तथा नवं सिद्धाः १४ । ७७ । १४० इत्यादयः सर्व एव गुणाः स्फुटा भवन्ति ॥

सप्ताहतः सूर्यहृतः शराग्रः
पञ्चाहतः सूर्यहृतो हयाग्रः ।
तमेवराशिं वद कुट्टकेऽस्मि-
न्संश्लिष्टसंज्ञे वितता मतिस्ते ॥ १५ ॥

न्यासः । गुणयोरैक्यं भाज्यः १२ । अग्रयोरैक्यं क्षेपः १२ हारश्च १२

अत्र गुणाप्ती $\frac{१२}{११}$ लब्धिरेव राशिः ॥

कोऽयंवर्गःस्वर्गदीपैर्विनिघ्नो
रूपेणाढ्यो जायते वर्ग एव ।
को वा वर्गो भर्गनिघ्नः सरूपो
वर्गःस्यात्तौ वर्गवादिन् वदाशु ॥ १६ ॥

न्यासः । प्रकृतिः १२ । क्षेपः १ । अत्रेष्टं रूपं कनिष्ठं प्रकल्प्य समासभाव नामार्गेण 'इष्टवर्गहृतः क्षेपः—, इत्यादिना साधिते रूपक्षेपसंबन्धिनी कनिष्ठज्येष्ठमूले क २ । ज्ये ७ । क्षे १ ।

अथ द्वितीयोदाहृतौ प्रकृतिः ११ । कनिष्ठज्येष्ठक्षेपाः क ६ । ज्ये २० । क्षे ४ 'इष्टवर्गहृतः—' इत्यादिना रूपक्षेपे मूले क ३ । ज्ये १० । क्षे १ ।

कनिष्ठज्येष्ठघातार्धतुल्यःक्षेपो यदा तदा ।
ह्रस्वज्येष्ठप्रकृत्यादि सर्वं मित्र निगद्यताम् ॥ १७ ॥

अस्यभङ्गः—

इष्टं चतुर्घ्नमङ्केन विहीनमथ वा युतम् ।
तेनैवेष्टेनसंक्षुण्णं सा भवेत्प्रकृतिस्त्विह ॥ १८ ॥

अस्या भूपैर्हताया भूयुताया यत्पदं च तत् ।
सैकं व्येकं चतुर्भक्तं स्वर्णक्षेपे क्रमात्फलम् ॥ १९ ॥
इष्टं ह्रस्वं प्रकृत्याथो तत्फलाख्येन संगुणम् ।
कार्यं तज्ज्येष्ठमूलं स्यात्ततःक्षेपस्त्वतिस्फुटः ॥ २० ॥

रूपक्षेपे कनिष्ठस्य झटिति स्फूर्त्यै केचन प्रकाराः—

द्विघ्नसंकलितेन स्यात्समाना प्रकृतिर्यदा ।
तदा ह्रस्वपदं रूपद्वयं स्यादेकसंयुतौ ॥ २१ ॥
सैकया व्येकया वापि कृत्या तुल्यो यदा हरः ।
तस्याः कृतेः पदं द्विघ्नं ह्रस्वं स्याद् भूयुतौ तदा ॥ २२ ॥
द्व्यूनया द्व्याढ्यया वापि कृत्या स्यात्प्रकृतिर्यदा ।
समा तदैकयोगे स्याद् ह्रस्वं तस्याः कृतेः पदम् ॥ २३ ॥
वर्गः स्वमूलस्य लवैर्युतोनो
गुणो यदा स्याच्च तदा कनिष्ठम् ।
लवोद्धृतेन द्वितयेन तुल्यं
क्षेपे शशाङ्कप्रमितेऽस्ति नूनम् ॥ २४ ॥

एवमन्येऽपि बहवः प्रकारामदीय उपपत्तीन्दुशेखरे प्रदर्शितास्त इहविस्तर भयान्न निरूपिताः ।

कालिन्दीजलकेलिलालसमिलद्गोपालमेलद्वया-
देकः संवदतीति कृष्ण विबलानस्मान्यदायास्यति ।
गोपालात्रिशतीयुतः समबला अन्यैर्भवामो वयं
नो चेत्ते भवता चतुर्गुणबलास्तन्मेलमानं वद २४ ॥

अत्रैकालापो यथा घटते तथा राशी कल्पितौ 'या १ रू ३०० या १ रू०
अत्राद्ययोगे गोपालत्रिशतीयुतः परेण सम इत्येकालापः । अथ द्वितीयात्त्रि शतीयुतः पूर्वापेक्षया चतुर्गुण इति चतुर्भक्त आद्यसम इति पक्षौ

या १ रू ३००
या १ रू २००
४

लब्धं यावत्तावन्मानम् ५०० अनेन पूर्वकल्पितौ राशी समुत्थाप्य जातौ राशी २०० । ५०० ।

गानैः कोकिलमञ्जुलैः परिमलैः रानन्दयन्तं फलै—
र्भारद्वाजमुखं द्विजोत्तमकुलं त्वामेत्य शाखाधिपम् ।
यातं पूर्णमनोरथं, सुरतरो स्वार्धाङ्घ्रिपञ्चांशकैः
पूर्वादिक्रमतश्चतुर्द्विजयुतास्तिष्ठाम्यहं तान्वद ॥ २५ ॥

अत्र राशिः । या १ अस्मात्स्वार्धाङ्घ्रिपञ्चांशकान्विशोध्यशेषं दृश्य (४) समं कृत्वा लब्धं यावत्तावन्मानम् ८० ।

निष्कैस्त्रिभिस्त्रिदशकम्बलका गृहीताः
काले त्रयोदशमितैस्त्रय एव दत्ताः ।
एवं कृते यदि खवेदमितोऽत्र लाभ—
स्ते कम्बलाः कति भवन्ति पुरा गृहीताः ॥ २६ ॥

अत्र कम्बलप्रमाणं या १ । यदि त्रयोदशभिस्त्रयो निष्कास्तदा यावत्ताव-न्मितैः किमिति $\frac{\text{या ३}}{१३}$ अथ विक्रयसमये त्रिभिः कम्बलैस्त्रयोदश निष्कास्तदा यावत्तावन्मितैः किम् $\frac{\text{या १३}}{३}$ अनयोरन्तरं चत्वारिंशत्समं कृत्वा यावत्तावन्मानमुन्नेयम् ॥

सार्धत्रिपञ्चकलवैः सहिताः समाना
अन्यांशयुग्मरहिताश्च खरामशेषाः ।
राशित्रयं वद तदा यदि बुद्धिरेव
बीजं तवास्ति शुभरूपमनेकवर्णम् ॥ २७ ॥

यथोक्तसमीकरणेन जाता राशयः ८० । ९० । ?

सप्तमांशेन यत्क्षेत्रं राज्ञा दत्तं कृषीवलैः ।
तद्धान्यमधिकं खार्या नीतमर्धीकृतं कियत् २८ ॥

अथ धान्यप्रमाणं या १ । तदर्धम् या $\frac{१}{२}$ खार्या अधिकमिति खारीयुतं या $\frac{१}{२}$ रू १ । इदं राशिसप्तमांशेन या $\frac{१}{७}$ तुल्यमिति जातं धान्यमानम् $\frac{१४}{५}$ ॥

यद्योगादथवांतरादपि पदं संप्राप्यते साधकै[३]-
रभ्यासादिह लभ्यते घनपदं तौ तावभिन्नौ वद ।
नानारूपधरौ यथा हरिहरौ सद्बीजवेद्यौ सखे
संख्याशास्त्रविचारसारचतुरा बुद्धिस्त्वदीयास्ति चेत् २९

अत्रालापद्वयं यथा घटते तथा कल्पितौ राशी याव ४ । याव ५ । अनयो-योगेऽन्तरे च कृते वर्ग एव स्यात् । अथानयोर्घातः यावव २० । एष घन इति यावत्तावद्दशकस्य घनेन यावघ १००० समीकृत्य पक्षौ यावत्तावद्घनेनापवर्त्य लब्धाव्यक्तमानस्य ५० वर्गेण २५०० कल्पितौ राशी उत्थापितौ जातौ राशी १०००० । १२५०० ।

द्वाभ्यां युक्तः कस्य राशेरंशः स्यादर्धसंमितः ।
छेदः पावकसंयुक्तः समस्त्र्यंशेन तं वद ३० ॥

यथोक्तक्रियया ज्ञातो राशिः ७/१८ ।

ईप्सितेन गुणकेन संगुणः
को घनस्तुहिनरश्मिसंयुतः ।
मित्र यच्छति पदं वदाशु तं
बोबुधीषि यदि बीजपद्धतिम् ॥ ३१ ॥

अत्रेयं युक्तिः—

द्विघ्नोऽभीष्टघनः क्षुण्णो लोचनाढ्योनितेन च ।
तेनाभीष्टघनेनैव शीतरश्मियुतः कृतिः ॥ ३२ ॥

---

१ ययोर्योगाद् हरिहररूपादिति तात्पर्यम् । २ अन्तरात् केवलं हरिरूपात् हररूपाद्वा । ३ मुक्त गणितसाधकैः अपरत्र उपासकैः । ४ गुणनात् योगाभ्यासाच्च । ५ घनमूलम्, घनं गहनतया दुष्प्रापं पद मोक्षाख्यमिति भावः । ६ 'तौतो' इति संमतौ द्विर्भावः । ७ वस्तुतोऽभिन्नौ अनयोरन्तरेण भिन्न— उभयोरेकाप्रकृतिः प्रत्ययभेदाच्च भिन्नवद् भाति । कश्चिन्मूढः कल्पयति हरिहरभेदं विनाशाय ॥ इति । ८ अङ्गभेदेन अवतारभेदेन च । ९ बीजगणितेन तत्त्वज्ञानेन च । १० गमना, विचारेणेति ।

नृत्ये नृत्यकरेषु यन्नृपतिना दत्तं वितानाम्बरं
तत्तैराकलितं चतुर्भुजगतैः संलग्नपर्वाङ्गुलैः ।
विस्तारे द्विकरं चतुर्दशकरं दैर्घ्ये विभागागतं
प्रत्येकं वद वस्त्रदोःपरिमितिं तन्नर्तकानां गणम् ३३ ॥

अत्र समचतुर्भुजेषु अष्टाभिरङ्गुलैः प्रत्येकं धृतेषु सर्वेषु पुरुषाः पूर्यन्त इति यावत्तावन्मितं भुजं चतुर्गुणितमेकहस्तमितैर्नरैः ३ यावद्गुण्यते तावत्सर्वे पुरुषा जाताः १२ । एतद्गुणमेकनराम्बरक्षेत्रफलं २८ भुजवर्गसमानमिति पक्षौ

याव १ या ०
याव ० या ३३६

यावत्तावतापवर्तितौ लब्धं भुजमानम् ३३६ ॥

सरित्तीरे तीरान्तरितसमवृत्तालयमलं
करैरूर्ध्वे पञ्चेन्दुभिरिषुयमैस्तत्र विहगौ ।
जले लीनं मीनं प्रति समगती तावपततां
तदा तत्तीरान्तः कथय वसुधां तत्समगतिम् ॥ ३४ ॥

गतिमानम् या १ । इष्टभूः २० । अयं भुजः २०। कोटिः १५ । कर्णः२५ अथानुपातः— यदि पञ्चविंशतिमिते कर्णे विंशतिर्भुजस्तदा समगतिमिते किमिति या ४/५ । एतदूना भूर्द्वितीयकोटिः पञ्चविंशतिमितायाः भुजः या ४/५ रू १०० । तद्वर्गयोगः कर्णवर्गः स्यादिति तस्य समगतिवर्गेणानेन याव १ समीकरणे पक्षशेषम्—

याव ९ या ८०० रू ०
रू १५६२५

अत्र पक्षौ षट्त्रिंशता संगुण्य शताष्टकवर्गं प्रक्षिप्य पक्षयोर्मूले

याव १८ रू ८००
रू १२५०

अतो लब्धंयावत्तावन्मानम् २५ इयं समगतिः ॥

अथ विशिष्टव्युत्पत्तिपरीक्षार्थं केचन निरुत्तराः प्रश्नाः प्रदर्श्यन्ते—

(१) मार्तण्डैर्मुनिभिर्मृडैश्च भजनादेकाग्रता दृश्यते
विश्वाप्तः स पुनर्द्वयं समभवत्संख्यावतां संमतः।
ऐक्यं तत्फलतोऽवतारकृतिहृतसत्तारकाग्रं सखे
तं जानीहि गुरूपदेशविधिना बीजं विजानासि चेत् ३५॥

(२) व्यग्रस्तीव्रकराहतः पुनरयं रुद्राहतो रूपवा-
नग्रे भूतिथिनाथपूर्णभजनाद्विष्णोः पदं प्राप्तवान्।
जातोऽयं सफलः सुराप्त इति यो भूपाग्रतामागत-
स्तं राशिं शशिना समं वद सखे बीजं विजानासि चेत् ३६

(३) अङ्कौ कौ हररामचन्द्रहरणादेकत्वमग्रे गतौ
तद्योगः शशिभक्तितोग्ररहितो रामाहतं चान्तरम्।
यद्वा तौ विषयैर्निरग्र इह यल्लब्धैक्यमप्याहतं
निःशेषं सकलैः सुरैर्वद सखे तौ श्रवणाक्षाविव ३७॥

(४)मुक्तानीलमहत्प्रवालविलसद्वैडूर्यवज्रैः क्रमा-
दम्भोधीषुरसाद्रिपावकमितैर्माषाश्रिमुख्याःसखे।
लभ्यन्ते शतयुग्मसानय शतद्वन्द्वेन तेषां यदा
यास्यामःपुनरुद्यमाय सधना रत्नाकरान्तःपुरम् ३८॥

(५)को राशिः शरनिहतः स्ववर्गहीनो
निःशेषं निजपदमर्पयत्यशेषम्।
तं राशिं दिश दशकंधरोपमानं
मानस्ते यदि गणितेऽस्तिषट्प्रमाणे ३९॥

(६)पञ्चादिद्विचयेन यत्प्रतिदिनं दत्तं धनं केनचि-
त्तस्मादप्यधिकैर्दिनैस्त्रिगुणितं तद्वत्परेणार्पितम्

तद्वित्तं वद वत्सवासरमिती चैवानयोरस्तिते
चेद्वर्गप्रकृतौ कृतिर्बहुविधैर्वर्णैर्विचित्रा सखे ४० ॥

एतेषां गणितप्रदर्शनपुरःसरमर्थो निरूप्यताम्। पूर्णाङ्काः सहस्रम्। घण्टात्रयमुत्तरकालः।

एवमस्य विचारस्य दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रमुपपत्तीन्दुशेखरे ॥ १ ॥

इत्ययोध्याप्रान्तवर्तिपण्डितपुरीवास्तव्य –द्विवेदोपाख्याचार्य सरयूप्रसादसुत –दुर्गाप्रसाद संकलितायामुदाहरणचन्द्रिकायां संस्कृतप्रश्न भागः समाप्त इति शिवम्।

( १ ) वह राशि क्या है जिसको दूना करके उसमें उसीका आधा जोड़ देनेसे योग १५ होता है।

य= अव्यक्त राशिहै तब प्रश्नके कथनानुसार २ य + $\frac{१}{२}$य, और १५ ये दोनों पक्ष आपसमें समान हैं।

∴ २ य + $\frac{१}{२}$य= १५ यह समीकरण निष्पन्न होताहै। तब छेदगम करने से ४ य+य = ३०, वा, ५ य=३०,

∴य=६ यह राशि। यही उत्तर है।

( २ ) वह राशि क्या है जिसको तिगुना करके उसमें १७ घटा दो तो शेषमें उस राशि से ५ अधिक रहताहै।

य= अव्यक्त राशि है, तब प्रश्नानुसार ३ य—१७ और य+५ ये दो पक्ष परस्पर समान सिद्ध होते हैं।

∴ ३ य—१७=य+५

पक्षान्तरानयनसे २ य = २२. ∴य= ११

(३) एक मनुष्यका गांव ऊंचे पर बसता रहा, उसने कुछ दूर पर बंदूक छूटतीबेर उजाला देखा और इसके २६$\frac{१}{४}$ विपल वा १०$\frac{१}{२}$ सैकंड पीछे बंदूककी आवाज़ सुनी तो कहो बंदूक उस मनुष्यसे कितनी दूरपर छूटी, और मानो कि उजाला २$\frac{१}{२}$विपल वा १ सैकंडमें १९२००० मील चलता है और आवाज़ १०९० फुट एकसैकंड में पहुंचताहै।

कल्पना करो कि उस मनुष्यसे य दूरीपर बंदूक छूटी और उजाला बंदूकसे जितने सैकंड में मनुष्यतक पहुंचा उसका मान अनुपातसे

| मील | | मील | | सैकंड | | सैकंड |
|---|---|---|---|---|---|---|
| १९२००० | : | य | :: | १ | : | $\frac{य}{१९२०००}$ |

३×१७६० अथवा ५२८० फुटका १ मील होताहै।

आवाज बंदूक से निकलकर जितने सैकंड में मनुष्यतक पहुंची उसका आनयन अनुपातसे

य मील= ३ × १७६०×य फुट

| फुट | | फुट | | सैकंड | | सैकंड |
|---|---|---|---|---|---|---|
| १०९० | : | ३×१७६०×य | :: | १ | : | $\frac{३×१७६०×य}{१०९०}$ |

प्रश्नानुसार उजाला और आवाज के पहुंचने में १०$\frac{१}{२}$ सैकंडका अन्तरहै

$$∴ \frac{३×१७६०×य}{१०९०} - \frac{य}{१९२०००} = १०\frac{१}{२}$$

$$\text{वा } \frac{३ \times १७६ \times १९२००० - १०९ \times य}{१०६ \times १९२०००} = १०\tfrac{१}{२}$$

$$\therefore य = \frac{१०६ \times १६२००० \times १०\tfrac{१}{२}}{३ \times १७६ \times १९२००० - १०९}$$

$$= \frac{२२१७४४०००}{१०१३६७५८६१} = २\tfrac{१}{२} \text{ मील ।}$$

(४) इस राशिके ऐसे दो हिस्से करो कि पहिले की चौथाई और दूसरे का पांचवां हिस्सा मिलकर ५ हों तो कौन से हिस्से हैं ।

उत्तर, १६ और ५

(५) दो नगरियों में १४० कोसों का फासिलाथा उनसे शिवरतन और जगदास ये दो मित्र आपस में मुलाकातके वास्ते एकही समयमें निकले उस में शिवरतन ११ कोस रोज चलतारहा और जगदास ९ कोस, तो बतला ओ नगरी से चलने के बाद कितने दिनपर उन दोनों की रास्ते में मुला कात हुई ।

कल्पना करो कि चलनेके बाद य दिनपर उनकी रास्तेमें मुलाकात हुई, तब ११य=शिवरतनके चलने के कोस और ९ य=जगदास के चलने के कोस ।

$$\therefore ११ य + ९य = १४०$$

$$\text{वा, } २० य = १४० \text{ और } य = ७ \text{ ।}$$

(६) बालानन्द, श्यामाचरण और रामसहाय इन तीन मनुष्योंको साझे के व्यापार में इकट्ठे ५४० रुपये मिले, उस में बालानन्दसे श्यामाचरण के १५३ रुपये अधिकरहे और श्यामाचरणसे रामसहाय के १२६ न्यूनरहे तो कहो हर एकके कितने कितने रुपये थे ।

उत्तर, क्रमसे तीनों के रुपये १२०। २७३ । १४७।

(७) वह क्या भिन्न संख्या है जिसके अंशमें २ जोड़ देनेसे उसका मान $\frac{१}{२}$ और छेदमें २ जोड़ देनेसे उसका मान $\frac{१}{३}$ होता है ।

उत्तर, $\frac{७}{१८}$

(८) वह दो अङ्कवाली कौनसी संख्याहै जिसमें उन्हीं दो१ अङ्कोंके योग का भागदो तो लब्धि ७ मिलतीहै और जो उस संख्या में १८ घटादो तो शेषमें उन अङ्कोंकी स्थिति उलटजातीहै ।

कल्पना करो कि य=इस संख्या का दशस्थानीय अङ्क है और र=एक स्थानीय है । तब १० य×र=संख्या

$$\therefore १० य \times र = ७ \text{ और सवर्णन से, } य = २ र,$$

$$\text{और } १० य \times र - १८ = १० र + य$$

$$\therefore ९ = ९र + १८, \text{ वा, } य = र + २$$

$$\therefore र = २ \text{ और } य = ४ \therefore ४२ \text{ यही संख्या है ।}$$

(९) अयोध्याप्रसाद और प्रयागदत्त ये दो मित्र थे उनमें अयोध्याप्रसादने प्रयागदत्तसे कहा कि तुममुझको १६ आम दो तो मेरे पास तुमसे तिगुने आम होजावें, तब प्रयागदत्तने अयोध्याप्रसाद से कहा कि जो तुम मुझको १७ आम दो तो मेरे पास तुमसे चौगुने आम होंगे, तब बतलाओ उन दोनों के पास कितने कितने आम थे।

उत्तर, अयोध्याप्रसादके पास २९ आम और प्रयागदत्तके पास ३१ आम थे।

( १० ) एक मनुष्य के पास दो घोड़े और सौ रुपयोंका एक जीन था जब वह मनुष्य पहिले घोड़ेपर जीन रखताथा तब उस जीन समेत घोड़े का मोल दूसरे केवल घोड़ेके मोलसे दूना होताथा और जब वह जीन दूसरे घोड़े पर रखताथा तब उस जीन समेत घोड़े का मोल पहिले केवल घोड़ेके मोलसे तिगुना होताथा तो हर एक घोड़ेका मोल क्या था।

पहिले घोड़े का य मोल था तो दूसरे का $\frac{य+१००}{२}$ हुआ।

$\frac{य+१००}{२}+१००=३$ य समच्छेद करने से $\frac{य+३००}{२}=६$ य छेदापगम करने से य+३००=६ य पक्षान्तरानयन से ६ य−य=२०० योग करने से ५ य=२०० भाग देनेसे य=६० $\frac{६०+१००}{२}=८०$ पहिले घोड़े का मोल ६० रुपये और दूसरे का ८०।

( ११ ) एक मनुष्यके अ और क दो पुत्र थे। उसने अपने मरणसमयमें उसके पास जितना धन था उतना दोनों पुत्रोंको समान बांटदिया। पीछे अने एक बरसमें ५४० रुपये और मिलाकर अपने विभागमें डाल दिये। तब क के पास जितना धन बचा उससे अके पास दूना धन होगया। तो उस मनुष्यके मरणसमय में उसके पास कितना धनथा।

उत्तर, २३८० रुपये

( १२ ) जिन संख्याओंका योग १७ और वर्गान्तर ५१ है वे दो संख्या क्या हैं।

उत्तर, १० । ७

(१३) एक हौजमें तीनमोरी ऐसी लगीहुईहैं कि उनमेंसे जो एक मोरीकी राह होकर पानी आवे तो पांचघड़ीमें हौज भरजाताहै। और जो दूसरीमोरी की राह होकर पानीआवे तो छघड़ीमें हौज भरजाताहै। और जो तीसरीमोरी में होकर पानीआवे तो दसघड़ीमें हौज भरजाताहै तो बतलाओ कि जो एक साथही तीनों मोरियोंमें होकर पानी आवे तो कितनी घड़ीमें हौजभरजायगा।

कल्पना करो कि य इष्ट घड़ी है। पहिली मोरी की राह से पांचघड़ी में

सब पानी भरजाता है इसलिये एक घड़ी में उसी मोरी की राह सब पानी का $\frac{१}{५}$ भाग हौज़में भरजायगा। और दूसरी मोरीके राह से घड़ी में सब पानी भरजाताहै इसलिये एक घड़ी में उसी मोरीकी राह सब पानी का $\frac{१}{६}$ हौज़ में भरजायगा। ऐसेही तीसरी मोरी की राहसे एक घड़ी में सब पानी का $\frac{१}{१०}$ भाग हौज़ में भरजायगा।

इस कारण जब तीनों मोरी एकसाथ चलेंगी तो एक घड़ीमें सब पानी का $\frac{१}{५}+\frac{१}{६}+\frac{१}{१०}$ भाग हौज़ में भरजायगा ।

परंतु तीनों मोरियों की राह से य घड़ी में सब पानी भरजाताहै इसलिये एक घड़ीमें तीनों मोरी की राह से सब पानी का $\frac{१}{य}$ भाग हौज़ में भरजायगा

$$\therefore \frac{१}{५}+\frac{१}{६}+\frac{१}{१०}=\frac{१}{य}$$

$$\frac{६+५+३}{३०} \text{ वा } \frac{१४}{३०}=\frac{१}{य}$$

$$\therefore =य\frac{३०}{१४}=२\frac{१}{७} \text{ घड़ी ।}$$

( १४ ) वह कौन सा राशि है कि जो उस संपूर्ण राशिमें उसका आधा जोड़ देनेसे योग २४ हो ।

उत्तर, १६

( १५ ) वह कौनसा राशिहै कि जो उसमें उसके दो तृतीयांश जोड़ने से योग २० हो ।

उत्तर, १२

( १६ ) वह कौन सी संख्याहै कि उसके आधे और तृतीयांश में ३ का अन्तरहो ।

उत्तर, १८

( १७ ) वह कौन सी संख्या है कि उसका चतुर्थांश उसके पञ्चमांश से ३ के समान अधिकहो ।

उत्तर, ६०

( १८ ) एक स्त्री कुछ फल लेके बाजार में बेचने गई। वहां उसने पैसे के सात २ फल बेंचे तब दो फल शेषबचे। फिर दूसरे दिन वह स्त्री उतनेही फल लेके बेचने गई। उस दिन उसने पैसे के नौ २ फल बेंचे तब एक फल बचा। यों उसको दो दिन के पैसे मिलके २५ मिले। तो वह दोनों दिन कितने २ फल लेके बेंचने गई।

कल्पना करो कि य फल लेकर बेचने गई थी तो प्रश्नानुसार $\frac{य-२}{७}+\frac{य-१}{९}=२५$ यह समीकरण हुआ।

छेदापगमसे ९ य-१८+७य-७=१५७५

पक्षान्तरानयनसे ९ य+७य=१५७५+२५

बाद योग करने से १६ य=१६०० हुआ भागदेने से य=१०० उत्तर।

(१९) एक बनियेने रुपया के ३० सेरके भावसे २० रुपयों के चने और २५ के भावसे ६४ रुपयों के चने मोललिये और २० के भावसे भी और कुछ चनेमोललिये और ये तीनों प्रकारों के चने इकट्ठे करके सब २३ सेरके भावसे बेंचडाले तो उसमें उसको ५ रुपये लाभहुआ। तो उसने २० सेरके भावके चने कितने रुपयों के मोललिये सो कहो।

य रुपयों के मोललिये तो प्रश्नानुसार

$$\therefore ३० \times २० = ६००,\ २० \times य = २० य$$

$$२५ \times ६४ = १६००,\ ६००१ + ६०० + २ य से २० + ६४ + ५ + य$$

$\therefore \frac{२२०० + २०य}{२३} = ८९ + य$ छेदगम $२२०० + २० य = २०४७ + २३य$

पक्षान्तरानयन $२३ य - २०य = २२०० - २०४७$ योग करने से $३ य = १५३$ भाग देनेसे $य = ५१$ उत्तर।

(२०) जिन दो संख्याओंमें पहिली का $\frac{१}{३}$ और दूसरी का $\frac{१}{४}$ इनका योग १६ होताहै और पहिली के $\frac{१}{५}$ में जो दूसरी का $\frac{१}{६}$ घटादें तो दो शेष बचता है वे संख्या क्या हैं।

य संख्या है, तो प्रश्नानुसार $१६ - \frac{य}{३} = \frac{४८ - य}{३}$ दूसरी संख्याका चौथा हिस्सा हुआ इसलिये इसकोचतुर्गुण करनेसे $\frac{(४८ - य)}{३} \cdot ४ = \frac{१९२ - ४य}{३}$ हुआ, यह पूरी दूसरी संख्या है इसलिये

$$\frac{य}{५} - \frac{१९२ - ४य}{१८} = २$$

छेदगम करने से $१८ य - ९६० + २० य = १८०$

पक्षान्तरानयन से $१८ य + २० य = ९६० + १८०$

योगकरने से $३८ य = ११४०$

भागदेनेसे $य = ३०$

उत्थापन देनेसे $\left(\frac{४८ - ३०}{३}\right) = २४$

पहिली संख्या ३० दूसरी २४

(२१) रामरतनने बिहारीके पास जितने रुपयेथे उतने और उसको दिये तब बिहारीने रामरतनके पास जितने शेष बचेथे उतने उसको फेरदिये ऐसा देनलेन तीनबार हुआ। तब दोनोंके पास चौंसठ २ रुपये हुए। तो बत- लाओ पहिले हरएकके पास कितने २ रुपये थे।

कल्पना करो कि रामरतनके पास य और बिहारीके पास र रुपयेथे तो प्रश्नानुसार।

| रामरतन | बिहारी |
|---|---|
| य | र |
| य−र शे० | २ र |
| (१) २ य−२ र | २ र−य+र=३ र−य शे० दू० |

$\frac{३ र — य}{३ य − ५ र}$ दूना किया दू० ६ र—२ य

(२) ६ य—१० र घटाने से $\frac{−३ य + ५ र}{−५य + ११र}$ दूना किया

$\frac{+५य+११र}{११य−२१र}$ शेष दूना किया $\pm \frac{१०य+२२र}{−११य+२१र}$ घटाने से

(३) २२ य−४२ र −२१य+४३र शेष

(१) २२ य−४२र=६४ उत्थापन देने से

(२) २१ य+४३र=६४ २२य-१८०६=६४

४६२य-८८२र=१३४४ २२य=१८७०

४६२य+९४६र=१४०८ य = ८५

६४र=२७५२=र=४३ यही उत्तर हुआ ८५

(२२) एक बनिये के पास दो भाव का मैदा है। एक सात आने पनसेरी दूसरा छ आने पनसेरी, तो इनमेंसे कितने२ मैदा मिलावें कि जिससे ६ आने ८ पाई के भाव का मैदा होजावे।

कल्पना करो कि ७ आने के भावका य पनसेरी मैदालें तो इसके ७ य आने दामहोंगे, और जो ६ आने के भावका १ पनसेरी मैदालेंतो एक पनसेरी के दाम ६ आने होंगे, इस लिये दोनों भावकी ( य + १ ) पनसेरी के दाम ( ७य+६ ) आने दाम हुए। परंतु हम दोनों भावके मैदा मिलाकर ६ आने ८ पाई पनसेरीका भाव किया चाहते हैं इसलिये इस भावसे(य+१) पनसेरी के दाम ( य+१ ) गुणा ६ आने ८ पाई अर्थात् ( य+१ ) ६⅔ आनेहुए क्योंकि ८ पाई=८⁄१२ आना=⅔ आना

∴ ७य+६=( य+१ ) × ६ ⅔

=६य+⅔य+६⅔ ∵ ६⅔=६+⅔

पक्षान्तरानयन करने से ७ य−६य−⅔य=६⅔−६

योग करने से ⅓ य=⅔=⅓×२

∴य=२

इसलिये ७ आनेके भावकी २ पनसेरी मैदा और ६ आने के भावकी १ पनसेरी मैदा, दोनों मिलाये जांय तो मिलेहुए मैदा के ६ आने ८ पाई पनसेरी के दाम होंगे।

( २३ ) एक ऐसी संख्या है कि उसमेंसे ६ घटाकर शेषको ६ से गुणा करो और पहिले संख्यामेंसे ४ को घटाकर शेषको ४ से गुणाकरो तो यह घात पूर्वघातके समान होताहै, तो कहो वह कौनसी संख्याहै।

उत्तर, १०

( २४ ) एकआदमी और एक लड़के ने १ खेत काटनेका २१ आनेका ठेकालिया परंतु जब संपूर्ण कामका दोपञ्चमांश होगया तब लड़का बैठरहा और आदमी अकेलेने कामपूरा किया और जितने दिनों में वे मिलकर काम करते उनसे १ $\frac{१}{४}$ दिन अधिक लगा और लड़का आदमी से आधाकाम करताथा इसलिये लड़के को मर्दसे आधी मज़दूरी मिलती तो बतलाओ कि दोनोंको क्या रोज मिलता होगा।

उत्तर, ≡)४ $\frac{६}{१७}$ पाई और ‒)८ $\frac{४}{१७}$ पाई।

( २५ ) किसी गृहस्थ के घर पर चोरी हुई। उसी समय उसने थोड़े कालतक इधर उधर खोजा पर कुछ मिला नहीं तब उसके मनमें आया कि एक घंटाभर पहिले जो मनुष्य यहां से गया वही चोरहै तब चोर जिस मार्ग में अपनी एकरूप गति से जाताथा उसी मार्गपर वह गृहस्थ भी उस चोर को पकड़ने के लिये अपनी एकरूप गतिसे चला। यह पहिले दो घंटेतक इसी अपनी चाल से चला और तब यह जाना कि चोर मेरेसे हर घंटे में ५ $\frac{१}{४}$ कोस अधिक चलताहै। इसलिये उसने तुरन्त अपनी गतिको दूना किया और जब वह घरसे चला उस कालमें ५ $\frac{१}{२}$ घंटेमें चोर को पकड़ा। तो चोर एक घंटेमें कितना चलता था और वह गृहस्थ आरम्भ में एक घंटेमें कितना चलताथा और उसने अपने घरसे कितने अन्तर पर चोरको पकड़ासो कहो।

कल्पना करोकि य कोस एक घंटेमें तो प्रश्नानुसार

य + $\frac{५}{४}$ चोर की १ घं० : २ घं० :: य कोस = २ य

१ : $\frac{७}{२}$ :: २ य = ७ य

$$७ \cdot य + २ = ९ य \quad \frac{१३ य}{२} \left( य + \frac{५}{४} \right) \text{कोष्ठकामि०} \quad \frac{५२ य + ६५}{८} = ९ य$$

छेदापगम ५२ य + ६५ = ७२ य

पक्षान्तर ५२ य — ७२ य — ६५

योग —२ य = —६५

भाग य = ३ $\frac{१}{४}$

गृहस्थ हरएक घंटे में ३ $\frac{१}{४}$ कोस

चोर हर एक घण्टे में ३ $\frac{१}{४}$ + १ = ४ $\frac{१}{४}$ कोस

$\frac{९}{२} \times \frac{१३}{२} = \frac{११७}{४}$ भागदेने से २९$\frac{१}{४}$ कोसपर अपने घर से चोर को जा पकड़ा ॥

( २६ ) पांच मनुष्यों ने कुछधन आपसमें इस प्रकार से बांट लिया कि पहिले मनुष्य ने सबधनका चौथा भाग और २४३ रुपये लिये। फिर दूसरे ने जो शेषधनबचा उसका चौथा भाग और २४३ रुपये लिये। फिर जो शेषधन रहा सोभी क्रमसे और तीन मनुष्यों ने इसीप्रकारसे बांट लिया। तब अन्तमें शेष कुछ नहीं रहा। तो बतलाओ कि वह सब धन कितनाथा-और हरएक मनुष्य ने कितने२ रुपये लिये।

सर्वधन य है तो प्रश्नानुसार पहिले मनुष्य को

$\frac{य}{४}+२४३=\frac{य+९७२}{४}$ पहिला $य-\left(\frac{य+९७२}{४}\right)=\frac{३य-९७२}{४}$ शेष रहा इसका चतुर्थांश $\frac{३य-९७२}{१६}+२४३$ दूसरे मनुष्य को $\left(\frac{३य-९७२}{४}\right)-\left(\frac{३य-९७२}{१६}\right)+२४३$ कोष्ठक मुक्तिसे $१२य-३८८८-३य+९७२-३८८८=\frac{९य-६८०४}{१६}$ शेष रहा दूसरे मनुष्यको देनेके अनन्तर इसका चतुर्थभाग $\frac{९य-६८०४०}{६४}+२४३$ तीसरे मनुष्य का हुआ

$$\frac{९य-६८०४०}{१६}-\frac{९य-६८०४०}{६४}+२४३$$

इसका अन्तर $३६य-२७२१६-९य-६८०४-१५५५२=\frac{२७य-३५९६४}{६४}$ शेष तीसरे का, इसका चतुर्थभाग $\frac{२७य-३५९६४}{२५६}$ हुआ,

$$\frac{२७य-३५९६४}{६४}-\frac{२७य-३५९६४}{२५६}+२४३$$

घटाने से

$$\frac{१०८य-१४३८५६-२७य+३५९६४-६२२०८}{२५६}=\frac{८१य-१७०१००}{२५६}$$

शेष।

$\frac{८१य-१७०१००}{१०२४}+२४३$ पांचवे का हुआ।

पहिला $\frac{\text{य}}{४}+२४३$

दूसरा $+\frac{३\text{य}-९७२}{१६}+२४३$

तीसरा $\frac{९\text{य}-६८०४}{६४}+२४३$

चौथा $+\frac{२७\text{य}-३५९६४}{२५६}+२४३$

पांचवां $+\frac{८१\text{य}—१७०१००}{१०२४}$

छेदापगमसे—

२५६य+२४८८३२+१९२य—६२२०८+२४८८३२+१४४य—१०८८६४+२४८८३२+१०८य—१४३८५६+२४८८३२+८१य—१७०१००+२४८८३२=१०२४य

पक्षान्तरानयनसे—

२५६य+१९२य+१४४य+१०८य+८१य-१०२४य=२४८८३२×५—२२०८+१०८८६४—१४३८५६—१७०१००

योग करने से—

२४३ य=७५९१३२

भागदेने से—

य= ३१२४ यह सर्वधन है

पहिले को $\frac{३१२४}{४}+२४३=१०२४$ रुपये मिले.

दूसरे को $\frac{३१२४-१०२४}{४}+२४३=७६८$ रुपये मिले.

तीसरे को $२१००-७६८=\frac{१३३२}{४}+२४३=५७६$ रुपये मिले.

चौथे को $१३३२-५७६=\frac{७५६}{४}+२४३=४३२$ रुपये मिले.

पांचवें को ७५६–४३२=३२४ रुपये मिले।

(२७) एकमनुष्यने ३ रुपयों के ५ कबूतर, ५ रुपयों के ७ सारस, ७ रुपयों के ८ हंस, और ८ रुपयों के ३ मोर इसभावसे १०० रुपयों के १०० पक्षी इसप्रकार मोललिये कि उनमें जितने सारस थे उतनेही मोर

और जितने रुपयों से हंस मोललिये उससे दूने रुपयों के मोर लिये तो वतलाओ उसमनुष्यने वे चारजातिके पक्षी कितने२ मोल लिये।

उत्तर, ४५ कबूतर। १४ सारस। २७ हंस। १४। मोर

(२८) अ, क, और ग इन तीनोंके मिलकर १०००० रुपये थे उसमें अ और क इनके रुपये मिलके क से १८४२ अधिकथे और क और ग इन के मिलकर असे २९१६ अधिकथे तव हर एकके कितने२ रुपये थे।

उत्तर, अ के ३५४२ क के २३७९ और ग के ४०७९।

इत्येकघातसमीकरणसंवन्धिप्रश्नाः।

---

## वर्गसमीकरण

(२९) जिस संख्याको सोलहमें जोड़ और घटा देनेसे जो दो संख्या उत्पन्न होंगी उनका गुणनफल २३१ है वह संख्या क्या है।

उत्तर, ५

(३०) जिन दो संख्याओंमें छोटीसे वड़ी तिगुनी है और उनके वर्गों का योग १६० है वे दो संख्या क्या हैं।

उत्तर, १२।४

(३१) एक मनुष्यने २० रुपयोंका कुछ वस्त्र मोललिया उसमें एकगजका मोल जितने आनेथा उससे सब वस्त्रके गजोंकी संख्या ५ गुनीथी तो कहो उस ने कितने गज लंवा वस्त्र मोललिया और एकगज वस्त्रका मोल क्या था।

उत्तर, उसने ४० गज वस्त्र मोललिया और एकगज का मोल ८ आने था।

(३२) जिन दो संख्याओं में छोटी संख्यासे वड़ी तिगुनी है और उन दो संख्याओं का गुणनफल ७५ है वे दो संख्या क्या हैं।

उत्तर, ५।१५।

(३३) १०० के ऐसे खण्डकरो कि उन खण्डों के वर्गोंका अन्तर ४००हो।

उत्तर, ५२।४८

(३४) जिन दो संख्याओं के वर्गोंका योग १६९ और गुणनफल ६० है वे दो संख्या क्या हैं।

उत्तर, १२ और ५।

(३५) जिन दो संख्याओंमें वड़ी संख्या उनके अन्तर से चौगुनी है और उनके वर्गों का अन्तर २८ है वे दो संख्या क्या हैं।

उत्तर, ८।६

(३६) जिस संख्याका तृतीयांश उस संख्यामें जोड़ के फिर उसको उसी तृतीयांशसे गुण दो तो गुणनफल १०० होता है वह संख्या क्या है।

उत्तर, ± १५

(३७) ८ इस संख्याके दो खण्ड ऐसे करो कि जिनमें पहिले खण्ड का वर्ग दूसरे खण्ड के वर्ग से ९ गुना हो।

उत्तर, ६।२

(३८) वे दो संख्या कौनसी है कि जिनके योगको उनके वर्गों के योगसे गुणदो तो गुणनफल १२० होता है और जिनका योग छोटी संख्यासे तिगुना है

उत्तर, २ और ४

